# DURŪHA SHIKSHĀ

( Criticism of Vidhi darpana while establishing Vidhirasayana )

*by*

## Second [ Chinna ] Appayya Dikshita

**Edited with a Critical Introductory Note**

*by*

MIMAMSA RATNA PT. A. SUBRAHMANYA SHASTRI.

*Mimamsa Vedantacharya*

*Reader in Mimamsa Darshana*

**Faculty of Oriental Learning & Theology**

*Samskrit Mahavidyalaya*

B. H. U. Varanasi-5

and

PT. ADYOPAHVA MADHWACHARYA TARKTIRTHA

*Mimamsa Vedantacharya*

**VARANASI**

**Shivaratri** **17-2-69**

**Samvat 2025**

# दुरूहशिक्षा

( विशिष्य विधिदर्पणखण्डनमुखेन विधिरसायनमण्डनपरा )

द्वितीय ( चिन्न ) अप्पय्यदीक्षितेन

श्रीमद्भारद्वाजकुलजलधिकौस्तुभ-श्रीकण्ठमतप्रतिष्ठापनाचार्य-चतुरधिकशत-
प्रबन्धनिर्माणधुरन्धर- महाव्रतयाजिश्रीमदप्पय्यदीक्षितसोदराचादीक्षित-
पौत्रस्य नारायणदीक्षितपुत्रस्य-'अलङ्कारतिलक "रुक्मिणीपरिणया"
द्यनेकप्रबन्धनिर्मातुरप्पादीक्षितस्य पुत्रेण-श्रीमन्नल्लबोम्मकुलार्णव-
पूर्णचन्द्र- चिन्नमाम्बागर्भशुक्तिमुक्ताफल - ब्रह्मण्यविरुदाङ्कित-
चोक्कनाथभूपालप्रियसचिव--चिन्नबोम्मभूपालहृदय-
कुहरविहरमाणसाम्बशिवप्रेरितेन विरचिता

मीमांसारत्न पं० अ० सुब्रह्मण्यशास्त्रिणा मीमांसावेदान्ताचार्येण
काशीहिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालये
मीमांसादर्शनप्रधानाध्यापकेन

तथा

पं० आद्योपाह्वमध्वाचार्येण तर्कतीर्थमीमांसावेदान्ताचार्येण
च, अनेककोशानुसारेण संशोध्य सम्पादिता प्रकाशिता च

शिवरात्रिः
सम्वत् २०२५ वाराणसी १७-२-६९

**This First Edition**

**is**

dedicated most respectfully

**to**

Mahā Mahopādhyāya Shāstra Ratnākara

**Pandit Sarvabhauma A. Chinnaswami Shastriar**

*Late Professor of Veda, Dharmashastra, Mimamsa, Karmakanda, Paurohitya, etc.*

Dean of Faculty of Theology B. H. U.
VARANASI

by his humble pupil

## प्रबन्धविषयविभागः

## PREFACE

Appayya Dikshita was a genius of rare ability and extraordinary versatility. He was not only great but also conscious of his greatness; he had the confidence to declare himself as the greatest mimāmsaka of the country. His work on Mimāmsā called **Vidhi-rasayana** created a sensation, and Pundits of Mimāmsa were quite excited over it. The reason was that Shri Dikshita pointed out that the Mimamsa view of Apurva-Vidhi was full of difficulties. The objeetions raised by him were challenged by Sankarbhatta in his **Vidhi-rasayana-dusanam** by Rameshwar Suri in his **Vidhibhusanam,** by Vankatenarayana in his **Vidhicamatkara chandrika** and by Kollur Narayana Shastri in his Vidhidarpanam. Other scholars also such as Khandadeva, Somanath, Anantdeva and Sambhubhatta wrote stray replies but not independent works, to meet the challenge of Shri Dikshita and to uphold the old traditional mimamsa view as propounded in works like Bhattadipika, Kaustubha and Mayukhamalika.

Notwithstanding the above attempts, many of Diksita's points remained unanswered specially his objection concerning Apurvavidhi, that its definition is overpervasive ( ativyapta ) as it applies even to cases that are well known examples of niyamavidhi. The remarkable feature of this controversy was that even the opponents of Dikshita accepted him unhesitatingly as an outstanding Mimasaka.

Various other scholars took up the defence of Vidhirasayana and upheld the views of Appaya Dikshita. Of these, two are noteworthy, namely, the **Vidhiratnavali** of

Shrinivasa dasa and **Duruhasiksa** of Chinna Appayya Dikshita. Chinna Appayya Dikshita was a contemporary of Cokkanath, the king of Vellor who flourished in the 16th century and so Chinna Appayya Diksita also must belong to 16th century. His work answers not only Somanath and his pupil Narayana Shastri but also others who criticised **Vidhirasayana**. So to Chinna Appayya Dikshita goes the credit of drawing attention to the problems raised in Vidhi-rasayana; it was he who forced the Pandits to reconsider their position in the light of difficulties pointed out by Appayya Dikshita. The book has seven Tarangas which are intended to refute the seven main objections of Narayana Sastri. The author specifically mentions two names Kaustubhakara Khandadeva and asmad gurvah ie. Somanath Dikshita whom he has criticised. **Duruhasiksha** therefore is a work of great merit and importance, and deserves the attention of everyone interested in Vidhi-tattva.

Mimaṃsa Ratna Pt. A. S. Shastri
Reader in mimamsa Darshana
Faculty of Oriental Learning and Theology
Sanskrit Mahavidyalaya
B. H. U. Varanasi-5

# भूमिका

अथेदं श्रीमद्द्वितीयाप्पय्यदीक्षितप्रणीतं दुरूहशिक्षानामकं विधिरसायनमण्डनपरम्, विशिष्य कोल्लूरनारायणशास्त्रिविरचितस्य विधिदर्पणस्य खण्डनात्मकं विधितत्त्वविचारणैकैकतानमानसानां शास्त्रार्थविनोदरसिकानां विद्वत्तल्लजानां समाराधनाय प्रकाश्यते ।

विधिरसायनन्तु सर्वतन्त्रस्वतन्त्राप्पय्यदीक्षितोपज्ञं केन्द्रीयसर्वकारानुमतशिक्षामन्त्रालयीयसुदुर्लभपुनर्मुद्रणग्रन्थमालायां प्रथमपुष्परूपेण प्रकाशितं हिन्दूविश्वविद्यालयेन । तत्र मखीन्द्राणां सर्वेषु दर्शनेष्वप्रतिहतगतावपि विशिष्य पूर्वोत्तरमीमांसाद्वयेऽनितरसाधारणं पाण्डित्यम् । यद्विषये शाब्दिकशिरोमणिः भट्टोजीदीक्षितस्तत्त्वकौस्तुभस्योपक्रमे दीक्षितेन्द्रान् सश्रद्धातिशयं प्रणमति ।

यथा—

"अप्पय्यदीक्षितेन्द्रानशेषविद्यागुरूनहं वन्दे ।
यत्कृतिबोधाबोधौ विद्वदविद्वद्विभाजकोपाधी ॥" इति ।

अभियुक्ता विद्वद्गोष्ठ्यां पद्यमिदं दीक्षितेन्द्रोपज्ञमुद्धरन्ति ।

यथा—

"आशैलादद्रिकन्याचरणकिसलयद्वन्द्वविन्यासधन्यात्
आरक्षोन्नीतसीतामुखकमलसमुल्लासहेतोश्च सेतोः ।
आ च प्राच्य-प्रतीच्यक्षितिधरयुगलाच्चन्द्रसूर्यावतंसात्
मीमांसाशास्त्रयुग्मप्रमथितमहिमा मृग्यतां मादृशोऽन्यः ॥" इति ।

इदञ्च तेषामुक्तिर्वा; अन्येषां वोक्तिर्भवतु, परन्तु तेषां प्राच्योदीच्यमीमांसाद्वये कूलङ्कषं पाण्डित्यम् । वाक्यार्थविचारप्रसङ्गे मीमांसान्यायसञ्चारनैपुण्यञ्चानितरसाधारणमिति निश्चप्रचमेव ।

इदञ्च प्रशंसावचनमसहमानः पण्डितराजो जगन्नाथोप्यात्मानमधस्तनेन पद्येन प्रशशंस ।

यथा—

आमूलाद्रत्नसानोर्मलयवलयजादा च कूलात्पयोब्धेः
यावन्तस्सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु ।
मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजाम्
वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः ॥" इति ।

ते च दीक्षितेन्द्रा विधिरसायने भाष्य-वार्त्तिक-शास्त्रदीपिका-न्यायसुधा-पर्यन्तेषु मीमांसकैरङ्गीकृतान्समर्थितांश्च मीमांसासिद्धान्तान्स्वप्रतिभावैभवेनाप्रधृष्येणाऽऽचिक्षिपुः।

ते च विषया इमे—

( १ ) क—व्रीहीन् प्रोक्षति" इदमपूर्वविधेरुदाहरणम्। तत्राक्षिपन्ति-स्म नेदमपूर्वविधेरुदाहरणमिति।

ख "व्रीहीनवहन्ति" नेदं नियमविधेरुदाहरणम्।

ग "इत्यश्वाभिधानीमादत्ते" नेदं परिसंख्याविधेरुदाहरणमिति।

( २ ) प्राप्तपरिसंख्याप्राप्तपरिसंख्ययोस्त्रैदोष्य-तदभावव्यवस्था दीक्षितेन्द्रैराक्षिप्ता। नेयं व्यवस्थोपपद्यत इति।

( ३ ) "व्रीहीन्प्रोक्षति" इत्यादौ व्रीहिपदस्यापूर्वसाधनत्वलक्षणा प्राचीनैरङ्गीकृता। सा न सम्भवतीति व्रीह्यादिशब्दानां लक्षणाक्षिप्ता मखिवर्यैः।

( ४ ) अप्राप्तिविधेराक्षेपः।

( ५ ) अपूर्वविधेर्वार्त्तिकोक्तलक्षणाक्षेपः।

( ६ ) नियमविधिलक्षणाक्षेपः।

( ७ ) एवं परिसंख्याविधिलक्षणाक्षेपः।

( ८ ) दृष्टार्थत्वं नियमविधेर्लक्षणमित्यादयः।

अन्ये च केचन विषया आक्षिप्ताः। किम्बहुना कृत्स्नमेव मीमांसाशास्त्रं तैराक्षिप्तम्। तदनन्तरं पूर्वोक्तानामाक्षेपाणामाक्षेपव्याजेन प्रायशः सर्वे विषयाः समाहिताः तत्र तत्र, केचन शक्यसमाधानाः, केचन सम्भवमात्रेणोपन्यस्ताः, यत्र तैश्शब्दतस्समाधानं न कृतम्; तत्र तत्र दुरूहशिक्षा समाधत्ते स्म इति वस्तुस्थितिः। विस्तरेण जिज्ञासमानैर्विधिरसायनस्य भूमिका द्रष्टव्या।

## पूर्वोक्ताक्षेपाणां परिहाराय शङ्करभट्टादीनां प्रवृत्तिः

एते चाक्षेपा अयुक्ता इति मीमांसकैश्शङ्करभट्टप्रभृतिभिरनन्तदेवपर्यन्तैस्सर्वैरेव विधिरसायनोक्तं चिन्त्यम्। विधिरसायनदूषणानामनवकाशः इत्यादिवदद्भिः भगीरथप्रयासः कृतः। परं स्वतन्त्रः कश्चन ग्रन्थः खण्डदेव-सोमनाथप्रभृतिभिर्न प्रकाशितः। अपि तु तत्र तत्राधिकरणे यं कञ्चन प्रसङ्गमानीयैते विषया विचारिताः। तेषां परिशीलनेनेदमवगम्यते दीक्षितेन्द्रोक्तान्नियमानङ्गीकुर्वन्तोऽपि सर्वे दीक्षितेन्द्रोक्तं खण्डयन्ति इति तु किञ्चिदपि न निर्वहते विचारात्।

## विधिरत्नावलीनिर्देशः

श्रीनिवासदासेन विधिरत्नावलीनामकः कश्चन प्रबन्धो व्यरचि । अयं ग्रन्थः कोल्लूरुनारायणप्रणीतस्य विधिदर्पणखण्डनमुखेन विधिरसायनोक्तार्थ-स्थापनपरः । अस्यापि विधिरसायनभूमिकायामस्माभिश्चर्चा कृता वर्तते ।

## विधिदर्पणस्यावतारः

दीक्षितेन्द्रैरुक्तानामाक्षेपाणां परिहाराय प्रवृत्तेषु मीमांसकेषु शास्त्रदीपिका-व्याख्यातुर्निर्दृष्टकुलतिलकस्य सोमनाथदीक्षितस्य शिष्यः कोल्लूरुनारायणशास्त्री विधिरसायनोक्तानामाक्षेपाणां महताभिनिवेशेन खण्डनार्थं प्राचीनाचार्योक्तानां मण्डनार्थं च विधिदर्पणनामकं प्रकरणं व्यलेखीत् । स यत्नेनैतानाक्षेपान्पर्यहार्षीत । तत्रैतावन्ति प्रकरणानि ।

१—अपूर्व-नियम-परिसंख्याविधीनामुदाहरणाक्षेपोद्धारः ।

( क ) अपूर्वविध्युदाहरणाक्षेपोद्धारः ।

( ख ) नियमविध्युदाहरणाक्षेपोद्धारः ।

( ग ) परिसंख्याविध्युदाहरणाक्षेपपरिहारः ।

२—त्रैदोष्यव्यवस्थाक्षेपपरिहारः ।

३—अपूर्वसाधनत्वलक्षणाक्षेपपरिहारः ।

४—अग्निविध्याक्षेपपरिहारः ।

५—अपूर्वविधिलक्षणाक्षेपपरिहारः ।

६—नियमविधिलक्षणाक्षेपपरिहारः ।

७—परिसंख्याविधिलक्षणाक्षेपपरिहारः ।

## विधिदर्पणविषये कथनम्

उपर्युल्लिखितप्रकारेण विधिरसायनोक्तानामाक्षेपाणां परिहारेण प्राचीनमतमेव समर्थितं दृश्यते ।

अयञ्च ग्रन्थ एतावतापि कालेन न केनापि प्रकाशं नीतः । विधिरसायन-पङ्क्तयस्तत्र तत्र किञ्चिद्व्यत्यासेनोल्लिखिता दृश्यन्ते । बहुषु विषयेषु विधिरसा-यनोक्तानामाक्षेपाणां यथावदनुवादेऽपि परिहारावसरे मौनमुद्रां भजते । अतो विधिदर्पणोक्तं दूषणं विधिरसायनोक्तमर्थं नास्कन्दतीत्येव वक्तव्यमापतति ।

## दुरूहशिक्षायाः प्रवृत्तिः

एवं विधिरसायनाक्षेपपरिहारान्निरसितुं दुरूहशिक्षा द्वितीयाप्पय्यदीक्षित-विरचिता प्रावर्तिष्ट ।

कोल्लूरनारायणशास्त्रिणा "विधिदर्पणे विधिरसायनोक्ता आक्षेपाः नोपपद्यन्त इति तेषामाक्षेपाणां परिहारमुखेन वार्तिकोक्तानामपूर्व-नियम-परि-संख्याविधीनां लक्षणोदाहरणे समीचीने" इति प्रत्यपादि ।

शास्त्रदीपिकाव्याख्यातुर्निट्टिलकुलतिलकस्य सर्वतोमुखसोमयाजिनः सोमनाथदीक्षितस्य मतं स्वोक्तार्थे साक्षितयोपन्यस्तमस्मद्गुरुचरणास्त्वित्यादिना । तदुपोद्बलकत्वेन बहून्यधिकरणानि ( सूक्तवाकाधिकरणादीनि ) उद्धृत्य तद्वि-रोधः उद्भावितस्तेन तत्परिहारभङ्गमुखेन विधिरसायनोक्ता आक्षेपाः मीमांसक-मूर्धन्योपज्ञाः युक्ता एव, तेषामाक्षेपाक्षेपव्याजेन समाधानमपि तैरुक्तं युक्तमेव । तत्रेदं बोध्यम । केचनाक्षेपा दीक्षितेन्द्रैस्स्वयं परिहृता', मन्दशङ्कासु अल्पप्रयो-जनशङ्कासु च निराकरणं तैस्सूचितमेव दुरूहशिक्षा प्रकटयतीति प्राक् अवादिष्म, तत्र दुरूहशिक्षा च विधिरसायनोक्तान् आक्षेपान् उद्धारभङ्गेन तथैव समर्थयति "दूषणञ्च वज्रलेपायते" इत्यादिवदन्ती । अतः दुरूहशिक्षाविधि-रसायनस्यैव परिवारः ( परिकरः ) इति विभावनीयं विबुधैः ।

## दुरूहशिक्षायाः प्रतिपाद्यो विषयः

प्रथमेन पद्येन चिकीर्षितार्थपालनाय पालके स्वामिनि चोक्कनाथभूपाले विद्यमानं महिमानमनुसृत्य, दुरूहशिक्षायाः प्रवृत्तेः, द्वितीयेन पद्येन स्ववंश-स्थेभ्यः प्रणामः कृतः । तेषामादिम आचार्यदीक्षितः, वक्षस्थलाचार्य इति तस्यैव नामान्तरं वृद्धाः कथयन्ति, यथोक्तं न्यायरक्षामणौ—

आसेतुबन्धतटमाच तुषारशैला-
दाचार्यदीक्षित इति प्रथिताभिधानम् ।
अद्वैतचित्सुखमहाम्बुधिमग्नभाव-
मस्मत्पितामहमशेषगुरुं प्रपद्ये ॥

यं ब्रह्मनिश्चितधियः प्रवदन्ति साक्षा-
त्तद्दर्शनादखिलदर्शनपारभाजम् ।
तं सर्ववेदसमशेषबुधाधिराजम्,
श्रीरङ्गराजमखिनं गुरुमानतोऽस्मि ॥

तथा—

विद्वद्गुरोर्विहितविश्वजिदध्वरस्य,
श्रीसर्वतोमुखमहाव्रतयाजिसूनोः ।
श्रीरङ्गराजमखिनःश्रितचन्द्रमौलि-
रस्त्यप्पदीक्षित इति प्रथितस्तनूजः ॥

अत एव नलचरित्रनाटकेऽप्यादीक्षितापरनामधेयो नीलकण्ठदीक्षितो नलचरित्रनाटकस्य प्रस्तावनायां स्वकुलवृद्धान् वर्णयति। तद्यथा—"पारिपार्श्विकः—'आः स्मृतमस्य कुलकूटस्थाः साक्षात्कृतब्रह्माणः सर्वविद्यागुरवः-छन्दोगाः, सोमपीथिनो द्वैतवादासहिष्णवो जगद्विदिता एव। अमीष्वपि विशेषात्तत्र भवानाचादीक्षित इति।

सूत्रधारः—साधु स्मृतं साधु। तस्य कृष्णराजवन्दितचरणारविन्दस्य भरद्वाजकुलचूडामणेरष्टभिः क्रतुभिरष्टभिरायतनैश्शम्भोः अष्टभिस्तडाकैरष्टभिश्च सर्वविद्याविशारदैस्तनयैरष्टापि दिशो यशोभिर्ज्वलिता" (न-च-पृ ३) इति, वचन-सन्दर्भेण कुलवृद्धान्नमस्करोति।

## कर्तव्यार्थप्रतिज्ञा

नारायणशास्त्री विधिरसायनोक्ताक्षेपान् 'विधिदर्पण' नामकेन ग्रन्थेन परिजहार। य आक्षेपपरिहारमुद्धर्तुमिच्छति, तेनायं ग्रन्थ उपासनीय इति। यथा श्रीहर्षः—"लोकेषु दिग्विजयकौतुकमातनुध्वमि"ति

यथा वा-

बोधाय वादिविजयाय च सत्वराणा-
मद्वैतसिद्धिरियमस्तु मुदे बुधानाम् ॥" इति।

एवमस्य प्रकरणस्य विधिरसायनपरिशिष्टरूपस्य यथा विधिदर्पण-खण्डनं विशिष्य विषयः, एवं शास्त्रदीपिका-व्याख्यातुस्सोमनाथदीक्षितस्यापि शास्त्रदीपिकाव्याख्याने विधिरसायनदूषणं तन्निरसनमपि प्रतिजानीते।

सिद्धान्तलेशसङ्ग्रहे दीक्षितेन्द्रोक्तदिशा विधिरसायने ये पदार्थाः कृतोपपादनास्सन्ति तान् सिद्धवत्कृत्य, लिखामि—

अत्र प्रायेणेतिपदस्वारस्यात्सूचितामनुक्तानाञ्चार्थानां प्रतिपादनं प्रतिज्ञातं प्रबन्धा, अयमर्थ आकर एव श्रुतिसूत्रोपपत्तिभिः स्पष्टीभूतः, तदस्माभिस्संक्षेपेण प्रदर्शित इति। ( पृष्ठ७३ )

"विधिदर्पणे ये विषयाश्शीर्षरूपेणोपन्यस्तास्तद्भङ्ग इति निर्देशः कृतः। द्वित्रेषु कोशेषु तरङ्गनाम्ना व्यवहारदर्शनात्तदनुसारेणास्माभिस्तरङ्गनाम्ना व्यवहारः कृतोऽस्मिन्संस्करणे।

(१) अत्र सप्त तरङ्गास्सन्ति। उदाहरणोद्धारभङ्गो नाम प्रथमस्तरङ्गः।

(२) प्राप्तपरिसंख्याऽप्राप्तपरिसंख्ययोस्त्रैदोष्य-तदभावव्यवस्थाभङ्गो नाम द्वितीयस्तरङ्गः।

(३) अपूर्वसाधनत्वलक्षणाऽऽक्षेपोद्धारभङ्गो नाम तृतीयस्तरङ्गः।

(४) अग्निविध्याक्षेपसमर्थनभङ्गो नाम चतुर्थस्तरङ्गः।

(५) अपूर्वविधिलक्षणाऽऽक्षेपोद्धारभङ्गो नाम पञ्चमस्तरङ्गः।

(क) अपूर्वविध्युदाहरणभङ्गः (ख) नियमविध्युदाहारणाक्षेपोद्धारभङ्गः

(ग) परिसंख्याविध्युदाहारणाक्षेपभङ्गः।

(६) नियमविधिलक्षणाऽऽक्षेपोद्धारभङ्गो नाम षष्ठस्तरङ्गः।

(७) परिसंख्याविधिलक्षणाऽऽक्षेपोद्धारभङ्गो नाम सप्तमस्तरङ्गः। इति।

एतेषु प्रकरणेषु विधिदर्पणोक्ता आक्षेपपरिहारा निराकृताः। विधिरसायनोक्ता आक्षेपा यथा पूर्वमवस्थापिताः, अत एव ग्रन्थकार उपक्रमे स्ववंशपरम्परायाम् उत्कर्षमुपवर्णयन् कर्तव्यं प्रतिजानीते निरसनीयनिर्दिशमुखेन।

यद्रसायनसमीरितं विधौ क्षुद्रधीः परिजहार दूषणम्।
तन्निराकरणकौतुकी जनः सन्निधापयतु मामिकां कृतिम्॥
यद्यपि न विधिरसायनमास्कन्दति दूषणं गुरूक्तमपि।
तदपि तदाधुनिकानां मन्दविषन्यायतो निराकुर्मः॥
प्रायेण सिद्धवत्कृत्य पदार्थान् विलिखामि तान्।
कृतोपपादना ये स्युर्मूले विधिरसायने॥

## उदाहरणोद्धारभङ्गो नाम प्रथमस्तरङ्गः।

"व्रीहीन्प्रोक्षती"ति विधिर्नापूर्वविधिः। "अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यामि"ति दर्श-पूर्णमासप्रकरणाधीतमन्त्रबलादेव प्रोक्षणकर्तव्यतासिद्धेरि"त्याक्षिप्तं विधिरसायने।

अपूर्वविधिलक्षणदूषणपरिहारस्यानुवादः।

तत्र केचित्परिहरन्ति—अयमपूर्वविधिरेव। एतद्विध्यभावे व्रीहिषु प्रोक्षणासिद्धेः। मन्त्रलिङ्गकल्प्यं प्रोक्षणं तु प्रस्तर एव स्यात्। तस्यैव साक्षादग्निसम्बन्धित्वात्, न तु व्रीहिषु। तेषां तण्डुलादिप्रकृतितया परम्परयाऽग्निसम्बन्धित्वादिति।

तद्सारम्। मूल एव दर्श-पूर्णमासप्रकरणे न तदपूर्वार्थतयाऽवगतस्ये-त्युदाहरणाक्षेपप्रथमवाक्यं लिखितमस्ति किल, तदर्थानालोचनमूलत्वात्। मध्ये च तत्र तत्र मूल एवोक्तमि'ति, तथा उपसंहारेऽपि तस्माद्विरुद्धं सकल-मिव भवद्‌दृश्यते येन तन्त्रम्—इति यदुक्तं दीक्षितेन्द्रैः, तत्तथैव वज्रलेपायत-इति।

"कथं बत निरुध्यतां कमलनालसूत्रैस्त्वया
मदत्रुटितशृंखलावलयबन्धनससिन्धुरः।
कृतं विधिरसायने तदिह दूषणान्वेषणैः
वरं पुरहरे चिरं मन इदं सखे स्थाप्यताम्॥' इति।

एवञ्च दुरूहशिक्षाया उपक्रमपरामर्शोपसंहारेष्वप्यर्थवादाधिकरणं वार्तिकोक्तरीत्या तात्पर्यनिर्णायकेषु परिशील्यमानेषु समग्रोऽयं ग्रन्थो विशिष्य-विधिदर्पणखण्डने विधिरसायनोक्ताक्षेपसमर्थने च पर्यवस्यतीति निश्चीयते।

तत्र विधिदर्पणविधिरसायनोक्ताक्षेपाणां परिहारप्रसङ्गे सूक्तवाकाधि-करण - आग्नेयाधिकरण-ग्रहैकत्वाधिकरण-संस्थाधिकरणाग्निधर्माधिकरणादीनि बहून्यधिकरणानि विरुध्यन्ते इति, तत्र तत्रोपन्यस्यति।

तत्र दुरूहशिक्षा तं शिक्षयति—

(१) शिथिलमिव भवद्‌दृश्यते, येन तन्त्रमित्याक्षेपोपक्रमरीत्या कृत्स्नमेव तन्त्रं व्याकुलीकृत्य, पूर्वपक्षयितुं प्रवृत्तैर्दीक्षितेन्द्रैर्नेदमिदानीमुप-पादनीयम्। सिद्धान्तचतुरैः खलु तदुपपादनीयम्। (पृष्ठ २२)

(२) इदं तावन्न विस्मर्तव्यम्, यदहं पूर्वपक्षी, यूयं सिद्धान्तिन इति। तस्माद्वारम्वारं सर्वशास्त्रव्याकुलीकरणे प्रवृत्तं मां प्रति नाभ्युपगमविरोध उद्भाव्यः, तस्य मदिष्टत्वात्। (पृष्ठ ३३)

(३) पूर्वपक्षिणो मम यवसाधारण्यभङ्गवत्स्वरविशेषस्य दीक्षणीयार्थत्व-भङ्गो नानिष्ट इति क्षुण्णः पन्थाः। (पृष्ठ ३६)

(४) पूर्वपक्षिणा मया युक्तिविरोधादेव भेतव्यम्, नाभ्युपगमविरोधात्, अन्यथा तत्तत्सिद्धान्तविरोधे सर्वपूर्वपक्षविलयापत्तेः। त्वया तु सिद्धान्तिना सर्वसिद्धान्तविरोधः सर्वथा परिहार्य एवेति त्वां प्रति युक्त एव। अग्निधर्माधि-करणसिद्धान्तविरोधोद्भावनमिति द्रष्टव्यम्। (पृष्ठ ४२)

(५) कथं मीमांसकमर्यादानिर्मर्यादं प्रवर्तत इति विभावनीयं भवद्भि-रित्यादिरभ्युपगमविरोधमात्रस्य पूर्वपक्षिणं प्रत्यदोषत्वात्।

( ६ ) तदपि दीक्षितेन्द्रैरेवोद्भावितमिति न स्वपरिहारः ।

( ७ ) यस्सिद्धान्तिनाऽवश्यं परिहरणीयः । तत्रैव हि पूर्वपक्षिण-स्संरम्भः । न हि स्वोक्तव्याप्तिखण्डनमात्रे कस्यापि प्रवृत्तिस्सम्भवति ।

( ८ ) तस्मान्न किञ्चिदनुपपन्नमित्यस्य किञ्चिन्नानुपपन्नम्, किन्तु सर्वमेवा-नुपपन्नमित्यर्थो द्रष्टव्यः ( पृष्ठ ४५ ) इति ।

( ९ ) यवानान्तु मुख्यानामेव सतामलक्ष्यत्वमित्यतिसाहसमित्यतिसाहस-मिति व्यक्तमेव ( पृष्ठ ४७ ) इति ।

( १० ) तस्मात्स्वाभ्युपगमविरुद्धमिदमधिकरणमस्मद्विरुद्धमिति कथं लिखितमिति चिन्त्यम् ( पृष्ठ ४९ ) इति ।

पश्चाद्व्रीहीणामपूर्वीयत्वविशेषलाभ इत्यस्य मूल एव निपुणतरमुपपादि-तत्वात्, तदुपरि कथमियं शङ्का हृदयमारूढेति विद्वद्भिर्विचारणीयम् ।

गङ्गेशोक्तरीत्या तस्यादोषत्वात्, विशिष्टस्य शक्यादन्यत्वेन तस्य लक्ष्यत्वे वृत्तिद्वयाभावाच्च ।

एतेनाग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिरि''ति दाशमिकाधिकरणम-युक्तमिति दर्शितम् । न चाग्नेः फलार्थत्वमसिद्धमिति वाच्यम् । "पशुकाम-श्चिन्वीत" इति वाक्यस्याभागिप्रतिषेधसूत्रे वार्तिकन्यायसुधयोरङ्गीकृतत्वात् । एवञ्च तद्वार्तिकस्यापि दाशमिकसूत्रविरोधः, तदीयवार्तिकविरोधश्चेति दिक् । अत्र नव्यैर्न कोऽपि परिहारो दत्तः । ( पृ० ६४ )

व्रीहीणां हि यागान्वयः श्रपणविधिसहकृतनिर्वापादिविधिभिः स्यादिति मूल उपपादितम् । ( पृ० ८८ )

न विस्मरणीयम्—यद्वयं पूर्वपक्षिणः सिद्धान्तं व्याकुलं व्याकुलीकुर्मः, न तु समर्थयाम इति । ( पृ० ९६ )

तथा च प्रवृत्तिविशेषकरत्वाभावप्रयुक्तवैयर्थ्यपरिहाराय ,विकल्पमाश्रयतां मते कस्यापि दूषणस्यानुपदर्शनात् । ( पृ० ९७ )

तन्मूलयोराक्षेप-समाधानयोरभित्तिचित्रकर्मायमाणत्वात् । ( पृ० ९७ )

सहत्वनिर्वाहकतया दृष्टार्थतासत्त्वाच्च परिसंख्याक्षेपे नियमोपन्यासस्तु यथाश्रुतभाष्याद्यनुसारेण मूले कृत इति ध्येयम् । तस्मादत्रातिव्याप्तिरेव । ( पृ० ९९ )

तस्मान्न कस्यापि वाक्यस्य "वैयर्थ्यमिति कथं प्रतिबन्द्युद्धारः । (पृ० १०५)

तस्माद्वैयर्थ्येऽपि वाक्यभेदायोगात्, वैयर्थ्यस्यैवाभावात् च दृष्टान्त-वैषम्याभावात्। कथं हविरार्तिवाक्यप्रतिबन्धद्‌युद्धारः। ( पृ० १०५ )

'सर्वे कारकविधयो नियमविधय' इति सिद्धान्तप्रवादोऽपि दृढः, अनाकुलं तु "दृष्टार्थो यः, स सर्वो नियमविधि"रिति दीक्षितेन्द्रवचनम्। ( पृ० ११९ )

अत्र दीक्षितेन्द्रैः सिद्धान्तभङ्गमङ्गीकृत्य तत्राऽव्याप्त्यादिकमुक्तम्। न वस्तुतः। अपूर्वीयलक्षणाया अग्रे तैरेव खण्डनात्। तन्मूलकनियमविधित्वा-भावस्य तदिष्टत्वात्। न तेष्वयं दोषः। सिद्धान्तिना सतापूर्वीयलक्षणां हित्वा यवसाधारणसमर्थनं स्वव्याघातकमिति द्रष्टव्यम्। ( पृ० १२६ )

अशक्यं च संस्कारवाक्यपदजन्यपदार्थोपस्थितिदशायामेवोपस्थिते व्रीहित्वे लघुशरीरे च सति तदतिक्रम्य, संस्कारवाक्यजन्मापातवाक्यार्थोप-स्थित्यनन्तरकालीनानार्थक्यादिप्रतिसन्धानानन्तरकालकल्प्यानेकप्राकणिकवाक्या-र्थनिष्कर्षानन्तरकालप्रत्येतव्यापूर्वीयत्वेन समकालप्रतिपन्नस्यापि तण्डुलप्रणाडी-कत्वस्य गुरुशरीरस्य चापूर्वीयत्वविशेषणत्वायोगात्। ( पृ० १२६ )

## सोमनाथदीक्षितमतस्य निरासः

दुरूहशिक्षायां 'यद्यपि न विधिरसायनमास्कन्दति दूषणं गुरूक्तम्' अपीति ग्रन्थादौ सामान्यरूपेण, प्रतिज्ञातम्। तदेव विशेषरूपेण स्वगुरूणां परिहारो 'युष्मद्गुरवस्तु सोमनाथदीक्षिताभ्युपगमोऽयं निरस्तः। इत्यादिभिरधोरेखाङ्कि-तेषु पृष्ठेषु साभिनिवेशं सोपपत्तिकञ्च निरस्यति। विधिरसायनोक्ता ये विशेषा-श्शास्त्रदीपिकाव्याख्यायां मयूखमलिकायां विधिरसायनोक्तं चिन्त्यं ३६४-३८३ ४९८-५८३-६१३-७२८-८३२ ❀ इत्यादिना रेखाङ्कितेषु पृष्ठेषूपन्यस्ताः, तान्सर्वा-नपि निरस्यति दुरूहशिक्षा, तथाऽन्यानपि मयूखमालिकाविषयान्तत्र तत्र निरस्यति। ते चास्मभिर्मेखिवर्यभूषणे प्रतिपादिता इति नेह प्रतन्यते।

## व्याख्याविशेषप्रदर्शनम्

१—दुरूहशिक्षाकारोऽपूर्वविध्युदाहरणाक्षेपपरिहारावसरे सूक्तवाका-धिकरणं लिखित्वा "सर्वो हि सम्बन्धः क्रियागर्भ" इति शास्त्रदीपिकावाक्यं गभीरार्थं "प्रसङ्गाद्विस्पष्टयामि" इति विलिख्य, किञ्चिदुपपादितम्। तदुपोद्ब-लनाय सोमनाथदीक्षितोयमिदं लिखितं दृष्ट्वा त्याक्षेपमुपन्यस्य शास्त्रदीपिकाया अव्याख्यानेऽपि पूर्वपक्षिणो मम न किञ्चित्प्रकृतं हीयत इत्युक्तम्। तेन प्रकृते

❀ १-३८, २-५८, ३-६०, ४-६१, ५-६४, ६-६५, ७-७२, ८-७६, ९-९५, १०-९६, ११-१०१, १२-१०२, १३-१०३, १४-१०८-११२, १५-१०९, १६-११२,

विवक्षितार्थो न सिद्ध्यति। यदि सूक्तवाकाधिकरणमुपपादनीयम्, तदित्थमुपपादनीयम्। सूक्तवाकज्ञाप्यग्रहणकर्मप्रस्तरः इत्यन्वबोधापेक्षया सूक्तवाकगुणकं प्रहरणमित्यन्वयबोधो लघुः। कैय्यटेनाप्ययं प्रकारः 'अन्तरान्तरेण' इति सूत्रे प्रतिपादितमिति, शास्त्रदीपिकाया अभिप्रायं वर्णयति, स च चतुर्थपृष्ठे द्रष्टव्यः।

२—अपूर्वसाधनत्वात्तेपोद्धारप्रसङ्गे विधिदर्पणे विश्वजित्सर्वपृष्ठोऽतिरात्रः' इति सूत्रोक्तमधिकरणमुद्धृतम्। तच्चाधिकरणं न भवदनुकूलम्, इति वदन् "अथावश्यं विश्वजिदधिकरणसिद्धान्तस्समर्थनीयः, तर्हि ब्रूमः। अस्तु प्रकृतौ पृष्ठबहुत्वम्। तथाऽपि विश्वजित्सर्वपृष्ठः" इत्यत्र षाडहिकपृष्ठविधिरेव, न ज्यौतिष्टोमिकपृष्ठविधिः। तस्माच्चोदकालोपाय, सर्वशब्दसाफल्याय, मध्यत इतराणीति शब्दसामञ्जस्याय, बहुविधलाघवाय, बह्वबाधाय च विश्वजिद्वाक्यं षाडहिकसर्वपृष्ठविधिपरमेवेति, अस्य विस्तरः ५७–५८ पृष्ठयोर्द्रष्टव्यः।

एवं तत्र तत्र प्रसङ्गेन, अनुप्रसङ्गेन वा शास्त्रीयान्पदार्थानुपपादयन्नयं स्वोक्तार्थदार्ढ्याय साभिमानं ब्रवीति ग्रंथगौरवभयाद्वार्त्तिकन्यायसुधयोः, श्रमवद्भिरुन्नेतुं शक्यत्वादुपरम्यत इति। एवं तत्र तत्र प्रतिपादितो विशेषः करतालमलकवत्प्रतीयेतेति।

## खण्डदेवमतोपन्यासः

तत्रभवान्मीमांसकाग्रणीः रुद्रदेवसूनुः खण्डदेवः कौस्तुभे भाट्टदीपिकायाञ्च चित्राधिकरणे पृष्ठोनि षट्, "अभित्वा, त्वामिद्धि, कया नः, तं वो दस्म, अभिप्रवः तरोभिर्वं;" इति तृचषट्केऽस्य पाठात्। रथन्तर-बृहत्-वामदेव्य-नौधस-श्यैत- कालेयानां षण्णाम्मध्ये बृहद्रथन्तरयोर्विकल्पस्य बृहत्पक्षे श्यैतम्, रथन्तरपक्षे नौधसमिति व्यवस्थितविकल्पस्य वचनान्तरसिद्धत्वान्नियतानि चत्वार्यनुष्ठेयानीति प्रतिपादयति।

## तन्निरासः

इदमनुपपन्नमिति दुरूहशिक्षा तं चिकित्सति। तथा हि—आद्याभ्यां तृचाभ्यां माहेन्द्रस्तोत्रमेकम्। कवतीतृचेन मैत्रावरुणं स्तोत्रं द्वितीयम्। तदनन्तराभ्यां तृचाभ्यां ब्रह्मसामस्तोत्रं तृतीयम्। अन्तिमेन तृचेनाच्छावकस्तोत्रं चतुर्थमिति। अनेन प्रकारेण षट्स्वेतेषु तृचेषु रथन्तरादीनि षट्सामानि क्रमेण गीयन्त इति तत्रत्या स्थितिः। तत्र सामभेदेन स्तुतिभेदो भवितुं नार्हति। अन्यथाऽऽज्यस्तोत्रे गायत्रैकसामके सामाभेदेन स्तुतिभेदो न स्यात्। दृश्यते च स्तोत्रभेदः।

अतः यथा ऋग्भेदः स्तोत्रभेदस्य प्रयोजको न भवति, तथा सामभेदोऽपि न स्तोत्रभेदप्रयोजकः। प्रायेण प्रतिपादम्, प्रतिपदं वा गुणभेदात्प्रत्यृचमनेष्टः स्तुत्यापत्तेः। न चेष्टापत्तिः, अग्निष्टोमे द्वादशस्तोत्रत्वभङ्गापत्तेः। षडेव पृष्ठानीति, भवदभ्युपगमस्य विरोधश्च स्यात्। अत एवमुपपादनीयम्, यथा—आज्यैः स्तुवते पञ्चदश होतुराज्यम्, सप्तदश मैत्रावरुणस्य, एकविंशं ब्राह्मणाच्छंसिनः, पञ्चदशमच्छावाकस्य, [ तां० ब्रा० अध्या० पं० ] इति निर्देशानुसारेणाज्यस्तोत्राणां चतुष्ट्वं समर्थ्यते, तथैव "पृष्ठैः स्तुवते, एकविंशं होतुः पृष्ठम्, त्रिणवं मैत्रावरुणस्य, सप्तदशं ब्राह्मणाच्छंशिनः, पञ्चदशमच्छावाकस्येति निर्देशेन पृष्ठस्तोत्राणामपि चतुष्ट्वमिति निश्चय उपपद्यते। एकस्मिन्नपि स्तोत्रे भिन्नगुणाभिधायितृचान्तरस्य ऋगन्तरवदविरोधात्। तस्मात्खण्डदेवोक्तं न युज्यत इति।

अत्रेदमनुसन्ध्येयम्—

मखिवर्येण "यद्व्रीहिप्रोक्षणादेः" इत्याद्यूनत्रिंशश्लोकव्याख्यायां सुखोपयोजिन्यां "पृष्ठैः स्तुवते" इत्येतदेवोत्पत्तिवाक्यम्। तेन चत्वारि पृष्ठस्तोत्राणि विधीयन्ते। "सप्त दशानि पृष्ठानि, एकविंशं हेतुः पृष्ठम्" इत्यादिप्रयोगान्माध्यन्दिनपवमानान्तरभाविनि चत्वार्यपि स्तोत्राणि पृष्ठशब्दवाच्यानि। क्वचित्पृष्ठशब्दप्रयोगस्तु धने द्रव्यशब्दप्रयोगवत्, अर्जुने पार्थशब्दप्रयोगवद् विशिष्य पृष्ठशब्दप्रयोग इति मन्तव्यम्। "आपो वा ऋत्वियमाच्छंन्" इत्यादिपृष्ठशब्दान्वाख्यानार्थवादवाक्ये पृष्ठशब्दस्य प्रवृत्तिनिमित्तत्वेन विवक्षितामपां पृष्ठादुत्पत्तिमव्यवहिताम्, वामदेव्यादुत्पन्नत्वेन व्यहितामुत्पत्ति रथन्तरादिषु प्रदर्श्य, "पिता वै वामदेव्यम्, पुत्राः पृष्ठानि, एतस्माद्वा एतानि योनेरसृज्यन्त, तस्मात्पृष्ठानां स्तोत्रं वामदेव्येनानुष्ठुवन्ति शान्त्यै, यद्धि पुत्रोऽशान्तं चरति, पिता तच्छमयति" इति वामदेव्यार्थवादबलाद्वामदेव्यापूर्वप्रयोज्यत्वं तयोरावश्यकमिति, माहेन्द्रपृष्ठ एव बृहद्रथन्तरयोर्व्यवस्थानात्पृष्ठशब्दस्य माहेन्द्रस्तोत्रे एव निरूढिः।

नन्वेवं सति विकल्पवचनमनर्थकमिति शङ्कनीयम्। पृष्ठशब्दस्य निरूढ्या माहेन्द्रस्तोत्रविषयत्वेन विकल्पवचनमिति कथनमनर्थकमेव। अत एव मखिवर्यैरुक्तम्—विकल्पवचनञ्च बृहद्रथन्तरं वा पृष्ठं कार्यमित्येवं रूपमस्तीति ग्रन्थकारा व्यवहरन्तीति" पृष्ठ ९३।

इदमेव पुरस्कृत्य, दुरूहशिक्षा वदति "विकल्पवचनस्यैवाविकल्पत्वात्, यस्यानर्थक्यमुच्यते, अत एवैतादृशं विकल्पवचन-

मस्तीति ग्रन्थकारा व्यवहरन्तीति मूले परोक्षवदभिधानम्। अग्रे तद्वाक्यप्रयोजनाभिधानन्त्वभ्युपेत्य वादमात्र दु० शि० पृष्ठ ५८ मिति। अतो यथाऽऽज्यस्तोत्राणि चत्वारि, एवं पृष्ठस्तोत्राण्यपि चत्वारीति कथनम्मखिवर्योपज्ञमेव। एतदेवादाय खण्डदेवप्रभृतयः स्वग्रन्थेषु स्वोपज्ञमेवेदमिति प्रत्यपीपदन्।

एतेन पार्थसारथिमिश्रः। बृहत्पृष्ठं भवति, रथन्तरं वा पृष्ठं भवतीति वचनेन स्तोत्रयोरेव विकल्प इति, 'पृष्ठैः स्तुवत' इत्यनेनैकमेव माहेन्द्रस्तोत्रं पृष्ठनामकं विधीयते, पृष्ठैरिति वहुवचनन्तु समिधो यजतीतिवन्न कर्मभेदमापादयति। लिङ्गसमवायात्तु पुरोडाशानलङ्कुर्विंतिवत्पृष्ठपृष्ठासमुदाये गौणम्, एकस्मिन्नेव पृष्ठस्तोत्रे बृहद्रथन्तरयोस्साम्नो विकल्प इति राणकमतञ्च निरस्तम्। विस्तरस्तु ग्रन्थशरीरे निविष्ट इति नेह प्रतन्यते।

## स्थालीपुलाकन्यायेन द्वित्रेषु स्थलेषु खण्डदेवमतप्रत्याख्यानम्।

( १ ) खण्डदेवः कौस्तुभे, भाट्टदीपिकायाञ्च मन्त्राधिकरणे-नियम—परिसंख्यातिरिक्तफलकविधित्वम्—अपूर्वविधित्वमिति तल्लक्षणमपि सुस्थम्। पृ० सं० ९०।४९ इत्यपूर्वविधिलक्षणं ब्रवीति। इदञ्च लक्षणं "विधिरत्यन्तमप्राप्ते" इत्यादिना वार्त्तिकेऽपूर्वविधिक्रमेण यद्यपि लक्षणानि प्रतिपादितानि। परन्तु खण्डदेवोक्तमपूर्वलक्षणमाचार्योक्तलक्षणार्थलेशमपि नानुवर्तते। अत ईदृशलक्षणकथनं खण्डदेवस्य स्वप्रज्ञाविलसितमिति सुधीभिर्मन्तव्यम्।

( २ ) नियम-परिसंख्यातिरिक्तफलकविधित्वमपूर्वविधित्वम्। तच्च सर्वेष्वपूर्वविधित्वेन स्वीकृतेष्वनुगच्छतीत्युक्त्वा "यदि सोमं न विन्देत् पूतीकानाभिषुणुयादि"त्यत्र सोमाभावे प्रतिनिधिन्यायेन सोमसदृशानां प्राप्तौ वचनेन ईषत्सदृशाः पूतीकाः पक्षेऽपि न प्राप्नुवन्ति, तस्यामवस्थायां यावन्न्यायेन सुसदृशं नियन्तुमुपक्रम्यते, तावदुपर्युद्धृतवचनेनेषत्सदृशाः पूतीका नियम्यन्ते। अतः प्रतिनिधिनियमोऽयमिति मीमांसकानाम्मर्यादामुल्लङ्घ्य, "सोमाभावे पूतीकानां मन्दसदृशतया प्राप्त्यभावेन तत्र पूतीकप्राप्तेरेव तात्पर्यविषयत्वान्नियमविधित्वानुपपत्तिमाशङ्क्य, एतद्वचनस्य सदृशप्राप्तिन्यायप्रवृत्त्युत्तरप्रवृत्तौ प्रमाणाभावेन पूर्वप्रवृत्तस्यास्य पूतीकप्रापकत्वं नोपपद्यते। अतस्तत्र पूर्वोक्तमपूर्वलक्षणं युज्यत एव। एवं वायव्यपशौ श्रुतस्य "हिरण्यगर्भस्समवर्तताग्रे" इति इत्याधारमाधारयती"त्यत्र हिरण्यगर्भप्रकाशकमन्त्रस्यैन्द्राधारे कथमपि प्राप्तिर्न सम्भवति। तत्र सत्यपि प्रकृतिक्लृप्तानियमादृष्टजनकत्वेनोत्तराधारे

मन्त्रविधौ "औदुम्बरो यूपो भवति" इतिवदपूर्वविधित्वेऽपि न काचित्क्षतिः ।
सर्वे कारकविधयः, द्रव्यविधयो वा नियमविधय इति मीमांसकप्रवादस्तु
ह्रीषादीनां निधनाक्षराणां वृष्ट्यादिफलार्थत्वमित्यादिव्यवहारादौत्सर्गिको
नेतव्यः । अत एव सर्वेष्वेव वाक्येषु विषयभेदेन, विषयैक्येन वा क्रमेण,
यौगपद्येन वानेकफलतात्पर्यकत्वेऽपि क्वचित्केनचिद्व्यवहार इति मखिवर्य-
वचनं नानुपपन्नमिति प्रत्यपीपदत् । इदमनुपपन्नम् । "यदि सोमं न
विन्देत" इति नियमविधौ भवदुक्तलक्षणस्यातिव्याप्तिर्वज्रलेपायते । सुसदृश-
प्राप्तिन्यायात्पूर्वमेव "पूतीकानभिषुणुयादि"त्यस्य प्रत्यक्षवचनतयाऽविलम्बेन
प्रवृत्तिरित्यभ्युगम्य, अपूर्वविधित्वसमर्थकेन भवता मन्दसदृशानां पूतीकानाम-
प्राप्तिरुपपादिता । तथा सति मुख्यस्यालाभे प्रतिनिधिन्यायेन तत्सदृशद्रव्य-
मुपादेयमितिन्यायप्रवृत्तेः पूर्वमप्युपर्युद्धृतवचनस्य झटिति प्रवृत्तिरस्तीति ।
सोमाभावे सति विधिरूपं पूतीकानां यागसाधनत्वविषयकमपूर्वविधिस्स्यात् ।
न हि सोमाभावे द्रव्यान्तराक्षेपादनन्तरं सुसदृशप्राप्तिन्यायप्रवृत्तेः पूर्वमन्त-
रालकाल एतस्य वाक्यस्य प्रवृत्तिरित्यत्रेश्वरस्याज्ञा राजकीयं वा वचनं किञ्चत्स-
मस्ति । अत एतस्य वचनस्य सर्वन्यायप्रवृत्तेः पूर्वम्, तदुत्तरं प्रवृत्तिस्वीकारे
पूतीकानामत्यन्ताप्राप्तिरेवेत्यतिव्याप्तिर्वज्रलेपायते । हिरण्यगर्भमन्त्रेऽतिव्याप्ति-
वारणस्यास्मदुक्तरीत्या सम्भवेन लक्षणकरणासामर्थ्येन सर्वे द्रव्यविधयः नियम-
विधय इति मीमांसकमर्यादायास्सामान्यपरत्वं स्वीकृत्य यूपौदुम्बरताविधि-
रिवास्यापि मन्त्रविधेरपूर्वविधित्वमेव, न तु नियमविधित्वम् । अतस्तत्राऽति-
व्याप्तिरदोष इति कथनं न प्रेक्षावतां बुद्धिमनुरञ्जयति ।

३—औदुम्बराधिकरणशास्त्रदीपिकायां गुणफलविधिपक्षनिरूपणावसरे
"फलाय विधीयमानो गुणो यत्र कारकतामापद्यते स आश्रयः"

यथा होमो दध्न इति पार्थसारथिः । अत्र कारकत्वमविवक्षितम् । अत
एव रेवत्यधिकरणे उक्तम्—"नावश्यं कारकतयैवाश्रयत्वम्, सम्बन्धान्तरेणा-
प्युपपत्तेः । तथा चायमत्र निष्कर्षः—फलाय विधीयमानो गुणो यां क्रिया-
मपेक्षते स आश्रय इति । अत एव मयूखमालिकायां सोमनाथ आह—इदञ्च
यत्र फलाय विधीयमानस्य गुणस्य जातिद्रव्य-शुक्लादिगुणरूपत्वम्, तदभिप्राय-
औदु० पृ० ११ मिति । इति क्रियारूपस्याप्याश्रयत्वं न व्याहन्यत इति । एते-
नादृष्टाद्वारकसम्बन्धे गुणविशेषविशिष्टत्वमाश्रयत्वमिति खण्डदेवोक्तं प्रत्यूढम् ।
तस्य पूर्वोक्तरीत्या तदुदाहृतस्थलेषु दोषस्योद्धरणादिति । अस्य विस्तरः । दुरू०
पृ० ६८ द्रष्टव्यः ।

एवं खण्डदेवमतं निराकृतम्। शास्त्रदीपिकाया उपरि खण्डदेवेन समुद्भावितानां दूषणानां समुद्धारस्तस्य भूमिकायां विधास्यते। एवं दुरूहशिक्षा कौस्तुभकारस्य खण्डदेवस्य मतं तत्र तत्र निरस्यन्ती विधिरसायनोक्तमेवार्थं सर्वेषां मूलमिति च प्रतिपादयति।

## दुरूहशिक्षायाः केचन विशेषाः

(१) उद्देश्यसमर्पकपद इव विधेयसमर्पकविधेर्लक्षणाया अन्याय्यत्वात्, वृत्तिमात्रलक्षणा तु निरूढत्वात् विधावपि न दोषः। विकृतिषु प्रसिद्धसम्बन्धाभावादतिदेशेन धर्माः प्रतिनिधिषु तत्सत्वाल्लक्षणेति विशेषः ( पृष्ठ ४६ )

न हि लक्षणसामानाधिकरण्यमेकः लक्षणाबीजम्। प्रसिद्धसम्बन्धसहकृतधर्माकाङ्क्षाऽपि तद्बीजत्वात् ( पृष्ठ ४७ )

"अर्धमन्तर्वेदि मिनोति, अर्धम्बहिर्वेदि" इत्यत्रानेकपदैरन्तर्वेदि-बहिर्वेद्युपलक्षितप्रदेशविशेषे लक्षणाया दृष्टत्वात्। न च व्रीहित्वस्यापि विशेषणे वृत्तिद्वयविरोध इति वाच्यम्। गङ्गेशोक्तरीत्या तस्यादोषत्वादित्यादि।

## ग्रन्थकर्तुः परिचयः

अयं ग्रन्थकारः प्रसिद्धस्य अप्पय्यदीक्षितस्य कनिष्ठभ्रातुराचादीक्षितस्य प्रपौत्रः, नारायणदीक्षितस्य पौत्रः, अप्पयज्वनो अलङ्कारतिलक-रुक्मिणीपरिणयादिनिबन्धकर्तुः पुत्र इति ग्रन्थान्तस्थतालिकातोऽवगम्यते। स्वयञ्च कथयति—

"ब्रह्माद्वैतप्रवचनगुरुर्यस्य तातोऽप्पयज्वा" इति।

नाप्रबन्धास्ति नायष्टा येषां नाब्रह्मवित्कुले,
आमूलोम्मीलितद्वैतान्कुलवृद्धान्नमामि तान्॥

इति पद्येन स्वपूर्वपुरुषानाचादीक्षित-रङ्गराजाध्वरीन्द्राप्पय्यदीक्षित-द्वितीयाचादीक्षितान्निर्दिशति। तदस्माभिर्नलचरित्रनाटकस्य प्रस्तावनोद्धरणेन प्रतिपादितम्, अस्य वंशावलीज्ञानाय आचादीक्षितान्मूलपुरुषादेतत्पर्यन्तं वंशावलिः पाठकानां सुखावगतये निर्दिश्यते। अत्र निर्दिश्यमाना वंशावलिः पुत्र-पौत्रादिरीत्यैवेति ध्येयम्।




अस्यैव सिंहमप्पय्यदीक्षित इति नाम। अस्य मीमांसावाङ्मयमनितर साधारणमालोक्य सन्तुष्टेन प्रभुणा भोसलवंश्येन सम्मानित इति जनश्रुतिः। स एव प्रकृतप्रबन्धः।

अप्पय्यदीक्षितेन्द्राणां वंशावलिर्महामहोपाध्यायबिरुदाङ्कितैश्चम्पकारण्यवासिभिस्त्यागराजमखिभी राजुशास्त्री इत्यपरनामधेयैः "स्त्यागराजस्तवे" दीक्षितेभ्य आरम्भ पूर्वपुरुषान्स्वतातचरणपर्यन्तान्द्वाभ्यां श्लोकाभ्यां निरदेशि। यथा—

"अप्पय्याध्वरिणां सुतेष्वचरमः श्रीनीलकण्ठाध्वरी
तत्पुत्रेषु दशाधिकेषु च तृतीयस्सिंहमप्पाध्वरी।
मीनाक्षीपदपूर्ववल्लभमखीमुख्यश्च तत्पुत्रयोः
तत्सूनुष्वपि पञ्चसु ह्यनुजको गंगाधराख्यस्सुधीः॥

श्रीगङ्गाधरयायजूकसुतयोर्ज्येष्ठो वशिष्ठो गुणैः,
ख्यातो मार्गसहायदीक्षित उमाकान्तं त्रिसन्ध्येऽर्चिता।
तत्पुत्रो नवनन्दितुल्यचरितः श्रीत्यागराजध्वरी,
तत्सून्वोरयमादिमश्शुभगुणैरप्पाध्वरीति श्रुतः॥"

## अस्य कृतयः, कालश्च सी. ए. डी. १६५०

अयञ्च दुरूहशिक्षाकारः पूर्वमीमांसासूत्रेषु 'तन्त्रसिद्धान्तदीपिकाम्' नाम टीकामलेखीदिति ज्ञायते, एवं विषयसंग्रहदीपिकानामा अपरोऽपि ग्रन्थः प्रणीतः इति मद्रपुरीयहस्तलिखितपुस्तकागारादवगम्यते। तत्र अप्पय्यदीक्षितेन कृतायां तन्त्रसिद्धान्तदीपिकायां प्रथमाध्यायस्य चतुर्थः पाद इति

उपसंहारस्थपुष्पिकातोऽवगम्यते, प्रकृतनिबन्धश्च तृतीयः, यः पाठकानां करकमलयोस्समर्प्यते। तत्रैव पुष्पिकायाम् अस्य वंशपरिचयः निर्दिष्टो वर्तते, सोऽस्माभिस्तात्तत्प्रकरणावसाने, मुखपृष्ठे च सन्निवेशितोऽस्ति। अत एतेन प्रणीता ग्रन्थास्त्रयः, अयं षोडशशतकस्योत्तरार्धे आसीदिति निश्चीयते। प्रकृतमनुसरामः।

अयञ्च दुरुहशिक्षाकर्ता चोक्कनाथभूपालमस्य ग्रन्थस्य निर्माणे स्वस्य प्रवर्तकं वदति। अयञ्च ग्रन्थकारः खण्डदेवं सोमनाथं नारायणशास्त्रिणमन्यांश्च समसमयान्मीमांसकान्निर्दिशन्षोडशशताब्द्या उत्तरार्धेनात्मानं स्थापयति। अयञ्च राजा षोडशशताब्द्यामासीदित्यैतिह्यविद आचक्षते। अतो यावद्बलवद्बाधकोपनिपातं षोडशशताब्द्यामासीदिति निर्णीयते १६५० तत्त्वबिन्दुभूमिकायामस्मत्सतीर्थ्यैस्स्वर्गीयरामस्वामिशास्त्रिभिरयमेव समयो निर्दिष्टो वर्तते।

## उपसंहारः

दुरूहस्य विधिरसायनस्य यथावज्ज्ञानं दुरूहशिक्षयाऽनायासेन समधिगम्यत इति नेदं तिरोहितं विदुषाम्। अतोऽस्य सम्पादनं कर्तव्यमिति महतीच्छासीत्। कर्माध्यक्षस्य भगवतो विश्वनाथस्य कृपयोपलब्धसामग्र्यास्य संशोधनमकरवाव पाठकानां परितुष्टये विधितत्त्वजुषां विनोदाय। तत्र यद्यपि काश्चन त्रुटयस्स्युस्तासां संशोधनेन ग्रन्थमिमं परिशीलयेयुः, येनावयोः परिश्रमः फलेग्रहिः स्यादिति।

सुधीजनवशंवदौ
पं० अ० सुब्रह्मण्यशास्त्री
आद्योपाह्वमध्वाचार्यश्च

१७-२-६९



श्रीमच्चिन्नापय्यदीक्षितविरचितं विधिरसायनभूषणं

# दुरूहशिक्षानामकं प्रकरणम् ।

विद्वत्प्रभोः कृपायोगात् चोक्कनाथमहीभुजः ।
दुरूहशिक्षां मन्दोऽपि निश्शंकं कर्तुमारभे ॥ १ ॥

नाप्रबन्धास्ति नायष्टा येषां नाब्रह्मवित्कुले ।
आमूलोन्मूलितद्वैतान् कुलवृद्धान्नमामि तान् ॥ २ ॥

कर्तव्यार्थप्रतिज्ञा ।

यद्रसायनसमीरितं विधौ क्षुद्रधीः परिजहार दूषणम् ।
तन्निराकरणकौतुकी जनः सन्निधापयतु मामिकां कृतिम् ॥ ३ ॥

यद्यपि न विधिरसायनमास्कन्दति दूषणं गुरूक्तमपि ।
तदपि तदाधुनिकानां मन्दविषन्यायतो निराकुर्मः ॥ ४ ॥

श्लाघाक्रमद्रुहिणगृहिणी कर्णपूरेन्दुरिङ्ख-
ज्ज्योत्स्नासङ्गद्विगुणधवलीभूतसाहित्यकीर्तिः ।
ब्रह्माद्वैतप्रवचनगुरुर्यस्य तातोऽप्पयज्वा
सोऽहं लक्ष्यैस्सह विधिविधालक्षणानि क्षिणोमि ॥ ५ ॥

प्रायेण सिद्धवत्कृत्य पदार्थान् विलिखामि तान् ।
कृतोपपादना ये स्युर्मूले विधिरसायने ॥ ६ ॥

उदाहरणोद्धारभङ्गो नाम प्रथमस्तरङ्गः ।

"व्रीहीन् प्रोक्षती"ति विधिर्नापूर्वविधिः । "अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यामि"ति दर्शपूर्णमासप्रकरणाधीतमन्त्रबलादेव प्रोक्षणकर्तव्यतासिद्धेरि"-त्याक्षिप्तं विधिरसायने ।

## अपूर्वविधिलक्षणदूषणपरिहारस्यानुवादः।

तत्र केचित् परिहरन्ति—अयमपूर्वविधिरेव। एतद्विध्यभावे व्रीहिषु प्रोक्षणासिद्धेः। मन्त्रलिङ्गकल्प्यं प्रोक्षणं तु प्रस्तर एव स्यात्। तस्यैव साक्षादग्निसंवन्धित्वात्। न तु व्रीहिषु, तेषां तण्डुलादिप्रकृतितया परम्परयाऽग्निसम्वन्धित्वादिति।

## तन्निरासः।

तदसारम्—मूल एव दर्शपूर्णमासप्रकरणे, "न तदपूर्वार्थतयाऽवगतस्ये"ति उदाहरणाक्षेपप्रथमवाक्यं लिखितमस्ति किल, तदर्थानालोचनमूलत्वात्। तदर्थाऽऽलोचनसत्वे हि प्रकरणीभूतप्रधानापूर्वार्थ एव हविषि संभवन्निवेशं प्रोक्षणं तत आच्छिद्य, तदङ्गयागीये हविषि प्रापय्य, प्रथमावगतमन्त्रस्य प्रधानार्थत्वं भजित्वा तदङ्गार्थत्वमपि कथं कल्पयेत्। अत एव सप्तदशारत्नित्वादेः प्रधाने साक्षादसंम्भवन्निवेशस्यैव तदङ्गे निवेश "इत्यानर्थक्यात्तदङ्गेष्वि"ति सूत्रेणोक्तम्।

किञ्च "व्रीहिभिर्यजेते"ति शास्त्रेण व्रीहीणां साक्षादेव यागाङ्गत्वमित्यस्यार्थस्यापि मूल एव "यद्व्रीहिप्रोक्षणादेरि"ति श्लोकावतारिकाग्रन्थे समर्थितत्वेन प्रस्तरापेक्षया यागाङ्गत्वे विप्रकर्षाभावेन व्रीहिष्वेव प्रोक्षणकल्पनौचित्यात्। उक्तविधया व्रीहिप्रस्तरयोर्यागसम्बन्धतौल्ये प्रस्तर एव प्रोक्षणमित्यस्य योगाच्च।

अपि च "अग्नये जुष्टं निर्वपामी"ति मन्त्रान्तरेण व्रीहिविषयेण व्रीहिष्वाग्नेयत्वं यादृशमवगतम्, तादृशमेव प्रकृतमन्त्रेण प्रत्यभिज्ञायमानं सद्व्रीहिष्वेव प्रोक्षणं कल्पयति, द्रागवगतत्वात्। न प्रस्तरे, तत्र तादृशमन्त्राभावेन प्रत्यभिज्ञाभावे तस्य बुद्ध्यनारूढत्वात्।

किं बहुना—प्रस्तरे प्रोक्षणमिति वाचोयुक्तिरप्ययुक्ता। तथा हि-मन्त्रस्य सम्पूर्णवाक्यार्थमवगम्य, "अयं मन्त्रोऽस्यार्थस्य प्रकाशने समर्थः" इति सामर्थ्यमालोच्य, तदनन्तरमेव तदनुगुणार्थे मन्त्रो विनियोक्तव्यः, न पुनर्द्रागेव मन्त्रैकदेशार्थज्ञानदशायामतदनुगुणार्थे विनियोक्तव्यः। तथा सति प्रकृतमन्त्रे"अग्नये जुष्टमि"त्यंशमनन्तर्भाव्य, "वः प्रोक्षामी" त्यंशार्थाववोधे तदनुगुणार्थे विनियोगापत्या ऋत्विगादिषु प्रोक्षणप्रसंगात्, तावतैव ऐन्द्राग्नेरपि प्रोक्षणसम्भवेन प्रोक्षणविधेस्तादर्थ्योपपादनविरोधापत्तेश्च। एवञ्च सम्पूर्णमन्त्रानुरोधादग्निना साक्षात्संवन्धसम्भवेऽपि वहुत्वाभावात् प्रस्तरमुपेक्ष्य, वहुत्वादग्निसंवन्धित्वाच्च व्रीहिष्वेव प्रोक्षणं कल्पयितुं न्याय्यम्। न चाग्निसंवन्धे

साक्षात्त्वलिप्सया बहुत्वमनादृत्य, एकस्मिन्नपि प्रस्तर एव प्रोक्षणं कल्प्यमिति वाच्यम्। व्रीहीणामपि "व्रीहिभिर्यजेते"ति शास्त्रेण साक्षात्सम्बन्धस्योक्तत्वात्।

किञ्च—प्रकृतमन्त्रेऽग्निसम्बन्धमात्रं शब्देन बोध्यते, न साक्षादिति वा, परम्परयेति वा?। साक्षात्त्वं तु अस्ति। विशेषग्राहकप्रमाणे सम्बन्धसामान्यं बोध्यमानमसाक्षात् सम्बन्ध इत्येव ग्राह्यमिति उत्सर्गन्यायाल्लभ्यते। तथा च न्यायमूलकसाक्षात्त्वानुरोधाय बहुवचनश्रुत्यवगतस्य प्रकृतविनियोगप्रमाणीभूतलिङ्गशरीरप्रविष्टतया प्रथमावगतस्य च बहुत्वस्य त्यागायोगात्तेन प्रधानभूतकर्मत्वान्वये गुणभूतवचनार्थस्त्यज्यते, पाशबहुत्ववदित्यपास्तम्।

सम्पूर्णलिङ्गानुसारिविनियोजकप्रमाणानुरोधेनाअग्निसम्बन्धिषु बहुषु च व्रीहिष्वेव प्रोक्षणकल्पने न प्रस्तरप्रोक्षणस्यात्यन्ताप्रसक्ततया तत्र बहुत्वत्यागापेक्षाया एवाभावात्। एवञ्च पाशबहुत्वदृष्टान्तोऽप्यनुपपन्नः, तत्र हि दैक्षपशौ पाशबहुत्वाभावेन पाशमन्त्रस्य बहुपशुकेष्ट्युत्कर्षे प्रकरणबाधो मा भूदिति प्रकरण एव निवेशकल्पनात्, प्रकरणेन पाशप्रकृत्यर्थप्रधानभूतद्वितीयाविभक्त्यर्थानुगृहीतेनानपेक्षितस्य गुणभूतस्य च वचनार्थस्य बाधोऽङ्गीकृतः। प्रकृते उक्तविधया कस्याप्यबाधेन व्रीहिप्रोक्षणे मन्त्रप्रवृत्तौ सम्भवन्त्यां न स्वेच्छाकल्पितप्रस्तरविषयप्रोक्षणपरत्वं सम्भाव्य, तत्र बहुवचनस्य बाधो युक्तः।

यत्वत्र सूक्तवाकाधिकरणं लिखित्वा, "सर्वो हि सम्बन्धः क्रियागर्भ" इत्यादि शास्त्रदीपिकावाक्यमपि गभीरार्थं प्रसङ्गाद्विस्पष्टयामीत्यभिप्रेत्य किञ्चिल्लिखितम् लक्ष्यलक्षकभावलक्षणक्रिया प्रवृत्ता। न चेह लक्षणक्रिया शाब्दोपात्ता। तथा च लक्षणक्रियायाः प्रयोजिकाया अनवगमे प्रयोज्यो लक्ष्यलक्षकभावः प्रत्येतुं न शक्य इति यथाकथञ्चिल्लक्षणक्रियां हृदयमागमय्य, स सम्बन्धः प्रत्येतव्य इति कारकविभक्तितो दौर्बल्यमित्थंभूतलक्षणविभक्तेरिति। अत्र पृच्छामि-किं प्रयोजकमज्ञात्वा प्रयोज्यमज्ञेयम्। तर्हि कुलालपितरं कुलालं वा अजानतो घटज्ञानं न स्यात्।

न चान्यादृशमेव प्रयोजकत्वमभिमतमिति वाच्यम्। लक्षणक्रियां विना लक्ष्यलक्षकभावस्यासम्भवादित्युपपादकग्रन्थेन तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वरूपस्यैव प्रयुक्तत्वस्य विभावनात्।

किञ्च ज्ञापके तृतीयामङ्गीकृत्य ज्ञापकलक्ष्यकयोरभेदञ्चाङ्गीकृत्य, लक्षणक्रियायाः शब्देनानुपादानमिति वाचोयुक्तिरपि कथं तृतीयाया एव ज्ञापनक्रियान्तःकरणं च युगपदभिदधानायास्सत्वात्।

सोम ( नाथ ) याजि दीक्षितीयं दृष्ट्वा इदं लिखितमिति चेत् ? अस्तु। तर्हि तत्रैवायं प्रश्नः। कथं तर्हि शास्त्रदीपिकेति चेत् तद्व्याख्यानेपि मम प्रकृतहान्यभावात्।

कारकविभक्तिबलीयस्त्वे, जिज्ञासायां तु ब्रवीमि·एकस्मिन्वाक्ये प्रयुज्यमानपदानां सर्वेषां क्रियान्वितार्थकत्वमावश्यकम्। तच्च "घटमानये"त्यादिकारकविभक्तिस्थले साक्षाल्लभ्यते। "जटाभिस्तापसो गच्छति"इत्यादौ जटादीनां तु साक्षादसम्भवात् तापसद्वारा गमनान्वयो लभ्यत इति क्रियान्वयसाक्षात्त्वकृतं बलीयस्त्वम्। "सूक्तवाकेन प्रस्तरं प्रहरती"त्यादौ तूभयथापि सूक्तवाकस्य प्रहरणान्वयसम्भवेन परम्पराश्रयणमयुक्तमिति सूक्तवाकाधिकरणमप्यनाकुलम्—न्यायसुधायां-"क्रियाया भवनात्मिकाया वाक्यार्थत्वेने"त्यादिग्रन्थेन सहेतुकमियं रीतिरुपपादिता।

कैयटेन तु "अन्तरान्तरेणे"ति सूत्रे कारकविभक्तित्वे कारकस्य क्रियान्वयमात्रम्। उपपदविभक्तित्वे क्रियाद्वारा उपपादार्थान्वयपर्यन्तमङ्गीकर्तव्यमिति लाघवात् कारकविभक्तिप्राबल्यमुक्तम्। तद्रीत्या "सूक्तवाकज्ञाप्यप्रहरणकर्म प्रस्तर" इत्यन्वयबोधापेक्षया "सूक्तवाकगुणकं प्रहरण"मित्यन्वयबोधस्य लघुत्वमिति सूक्तवाकाधिकरणमुपपादनीयम्। शास्त्रदीपिका राणकरीत्या व्याख्येया। सर्वो हि सम्बन्ध इत्यादेरयमर्थः—इत्थंभूतलक्षणतृतीयायाः प्रस्तरान्वये लक्षणक्रिया द्वारीकर्तव्या। सर्वो हि सम्बन्धः क्रियागर्भशब्देन बोध्यते, न तु क्रियामनन्तर्भाव्य शाब्दः संसर्गबोधोऽस्ति। न चात्र लक्षणक्रियोपात्ता प्रकारान्तरेण कथञ्चित्तामप्रतीत्य प्रस्तरान्वयः सूक्तवाकेनेत्यस्य प्रत्याय्यः। प्रहरतिना तु द्वारानपेक्ष एवान्वय इति कारकविभक्तेर्बलीयस्त्वम्।

न चैवं तृतीयोपात्तत्वाल्लक्षणक्रियायाः कथं शब्दोपात्तत्वमिति वाच्यम्। अत एव ग्रन्थस्वारस्यादित्थंम्भूतलक्षणतृतीयागम्यमानां लक्षणक्रियामपेक्ष्य तत्करणं वक्तीति कल्पनात्।

'जटाज्ञाप्यतापसत्ववानि'ति शाब्दबोधाकारप्रदर्शनं तु पर्यवसितकक्ष्याभिप्रायं द्रष्टव्यमिति कृतं प्रसक्तानुप्रसक्त्या। एतेन वेदि-बर्हिः-पुरोडाशेषु प्रोक्षणप्रसक्तिरपास्ता। सम्पूर्णलिङ्गस्यैव विनियोजकत्वात्। "व्रीहीनवहन्ती"ति विहितावघातार्थमन्त्रात् प्रागाम्नातप्रकृतमन्त्रकल्प्यप्रोक्षणस्यावघातोत्तरकालकर्तव्येषु प्रवृत्त्ययोगाच्च। तण्डुलावस्थायां प्रोक्षणं तु "अग्नये जुष्टं निर्वपामी"ति वत् तण्डुलनिर्वापमन्त्राभावेन प्रत्यभिज्ञाकारणाभावात् "व्रीहिभिर्यजेते" तिवत् "तण्डुलैर्यजेते" त्यादिरूपस्य प्रातिस्विकयागसम्बन्धमात्रैदम्पर्यप्रवृत्तस्य

कस्यचित् शब्दस्याभावेन आक्षेपलभ्ययागसम्बन्धकत्वाच्च न यथोक्तरूपेषु व्रीहिषु सत्सु कल्पनार्हमिति निरसनीयम्।

यत्तूक्तं तण्डुलप्रोक्षणपक्षे मन्त्रपाठक्रमानुसारेण प्रोक्षणमन्त्रानन्तराम्नातावघातमन्त्रकरणकाववोधोऽपि तण्डुलेष्वेव कर्तव्यस्सन्नदृष्टार्थस्स्यादित्याशङ्क्य, तदापि दृष्टार्थत्वमस्त्येवेति।

तदपि, न तण्डुलीभवनार्थमप्यवश्यापेक्षितमवघातं विहायानावश्यके तण्डुलावघाते नित्यवदाम्नातमन्त्रस्य करणत्वायोगात्। न हि वैतुष्यार्थावघातेनेव तण्डुलधावल्यार्थावघातेनापि विना व्रीहीणां पुरोडाशप्रकृतित्त्वानुपपत्तिर्येन सोऽपि मन्त्रप्रकाश्यः स्यात्।

किञ्चास्तु वा तादृशोऽप्यवघातस्तथापि प्रथमप्रवृत्तं 'व्रीहीनवहन्ती'ति प्रत्यक्षविधिं चापहाय, पश्चात्प्रवृत्तेऽशाब्देऽवघाते अवघातमन्त्राप्रवृत्त्या तत्पूर्वकर्तव्यप्रोक्षणस्य व्रीहिविषयत्वावश्यम्भावाच्च। यच्च प्रकृतमन्त्रस्य प्रोक्षणाक्षेपकत्वे गौरवात् श्रुतप्रोक्षणेष्वाग्नेयाग्नीषोमीयादिपशुषूत्कर्ष एव स्यादिति। तन्न। आग्नेयाग्नीषोमीयात्मकपशुद्वयवत्या विकृतीष्टेर्मृग्यत्वात्। प्रत्येकपशा"वग्नये वो जुष्टं प्रोक्षामी"ति, 'अग्नीषोमाभ्यां वो जुष्टं प्रोक्षामी'ति च सानुषङ्गं विभज्य विनियोगाश्रयणेऽपि "व" इति पदानुपपत्तिः स्थितैव। आग्नेयाः, अग्नीषोमीयाश्च वहवः सहालब्धव्याश्च क्वचन सम्भाव्यन्ते पशव इति कल्पनेऽपि तेषां दैक्षपशुतश्चोदकपरम्परया "अद्भयस्त्वौषधीभ्यः" इत्यादिमन्त्रसहितस्य प्रोक्षणस्यापि प्राप्त्या तत्रत्यप्रोक्षणे मन्त्रान्तरनिराकाङ्क्षे प्रकृतमन्त्रस्य उत्कर्षे विनिवेशासम्भवात्। तादृशविकृतिसन्निधौ "पशून् प्रोक्षती"ति कश्चिद्विधिरस्ति। तत्रास्य निवेश इति चेत्। अहो कल्पनम्! तथापि तादृशविधौ सति गृहमेधीयन्यायेन तस्य क्रतोरपूर्वत्वापत्त्याऽवभृथोपसदादिवत् क्वचित् केनचित् सोऽपि क्रतुरुदाहृतः स्यात्। अथाप्यस्ति-अस्तु किं ते लाघवम्? तत्रोत्कृष्यमाणस्यापि मन्त्रस्य तादृशविकृत्यपूर्वार्थता कल्पनीया। मम तु प्रोक्षणं कल्पनीयम्। को विशेषः?

किञ्च मया प्रकरणमनुगृह्यते। त्वया प्रकरणं बाध्यत इति प्रत्युत तव गौरवम्। पूषानुमन्त्रणमन्त्रस्य प्रकरणादत्युत्कर्षे हुतानुमन्त्रणमन्त्रप्रायपाठात् प्रथमं होमस्ततः पूषयागस्तस्य फलं स्वर्गः यागाङ्गत्वम्, यागस्य द्रव्यम्, तदनुगुणेतिकर्तव्यता च कल्प्या।

न चास्य ध्रौवाज्यं क्लृप्तमेवेति वाच्यम्। "पूषा प्रपिष्टभागः" इति सन्निहितवाक्यलब्धपेषणवशात्तदनुगुणद्रव्यान्तरस्यैव कल्प्यत्वात्। एवं महद्गौरवम्।

अपि च "त्रयोदशामावास्यायामाहुतयः" इतिलिङ्गं च बाध्यते। तद्वरं प्रकरणमेकं बाधित्वा प्रातिस्विकविधिविहिते यागे उत्कर्ष एव कल्प्यत इति वैषम्यमित्यास्तां तावत्। तस्मात् "व्रीहीन् प्रोक्षती"ति नापूर्वविध्युदाहरणमिति सिद्धम्।

## नियमविधिलक्षणदूषणपरिहारस्यानुवाद-निरासौ।

एतेन "व्रीहीनवहन्ती"ति विधिर्न नियमविधिः। अवघातनियमस्य "अव रक्षो दिवः सपत्नो वध्यासमि"ति नित्यवदाम्नातमन्त्रलिङ्गबलादवघातैक-प्रयोजनकनित्यवदाम्नातोलूखलमुसलबलाच्च सिद्धेरित्यत्र यदुक्तमत एवेत्या-दिना अवघातनियमाक्षेपे गौरवात् "सर्वौषधस्य पूरयित्वावहन्ती" त्यग्निप्रक-रणाम्नाते अदृष्टार्थावघाते मन्त्र उत्कृष्येत। तत्र अवघातनियमस्य क्लृप्तत्वे-नानाक्षेप्यत्वात्। उलूखलमुसले अप्यवघातार्थे यत्रावघातः श्रुतस्तत्रोत्कृष्ये-याताम्। अतः प्रकृतावघातनियमार्थं "व्रीहीनवहन्ती"ति विधिरावश्यक एवेति। तदपि परास्तम्। मन्त्रोत्कर्षे नियमाकल्पनेऽपि मन्त्रे अग्न्यपूर्वार्थतायाः कल्प्य-त्वात् दर्शपूर्णमासार्थत्वस्यावगतस्य बाधप्रसङ्गाच्च "अवहन्ती" त्यवघातघटित-द्वन्द्वसम्पादनविधिवशाद्यजमानेनाप्यवश्यंकर्तव्यं प्राकरणिकावघातमुपेक्ष्याग्नि-प्रकरणे उत्कर्षकल्पनस्य साहसमात्रत्वाच्च। अत एवोलूखलमुसलोत्कर्षवाचो-युक्तिरप्यपास्ता।

यत्तु-'अश्विनोस्त्वा बाहुभ्यां सध्यासम्, नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषमि"ति मन्त्रयोस्तु नोत्कर्षः। प्रत्यक्षश्रुतयोः ग्रहणावेक्षणयोः क्वाप्य-भावादिति, तदतितुच्छम्।

"अंशुं गृह्णाति, अदाभ्यं गृह्णाति, ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति, षोडशिनं गृह्णाती" त्यादीनां प्रकृतिविकृतिषु सहस्रश उपलम्भात्, आज्या-वेक्षणादिविधीनामसङ्ख्येयत्वाच्च तेषु प्रातिस्विकमन्त्रोऽस्तीति चेत्। सर्वौष-धावघातेऽपि "उत स्मते वनस्पते वातो विवात्यग्रमित्" । "अथो इन्द्राय पातवे सुनुसोममुलूखले"ति मन्त्रस्य सत्त्वात्, मन्त्ररहितोदाहरणस्यापि सत्वाच्च, तेषु प्रातिस्विकमन्त्रसत्त्वेऽपि अस्य मन्त्रस्य करणमन्त्रत्वेन, क्रियमाणानुवादिमन्त्र-त्वेन एतेष्वेव ग्रहणावेक्षणेषु समावेशसम्भवाच्च। त्वयैव वेदिप्रोक्षणे 'अग्नये वो जुष्टमि"त्यादिमन्त्रमङ्गीकुर्वता क्रियमाणानुवादित्व-करणत्वाभ्यां मन्त्रद्वय-समावेशस्याङ्गीकृतत्वात्। स्वप्रकरणगतग्रहणादिसम्बन्धे स्वप्रकरणबाध-प्रकरणान्तरसम्बन्धकल्पनक्लेशस्याप्यभावेन ऐन्द्रवायवग्रहणादिविषयत्व-सिद्धौ "अश्विनोरि"त्यादिमन्त्रेण ग्रहणावेक्षणनियमस्य सुतरामप्रसक्ति-

प्रसङ्गात् "प्राण्यापान्या निमील्य वीक्ष्य" इति विहिते अमन्त्रकाग्निहोत्रहविर्वीक्षणे, तथाविधे "हुत्वा महदभिवीक्षत" इत्यादिवीक्षणे च त्वदुक्तरीत्या वीक्षणमन्त्रस्य उत्कर्षसम्भवाच्च, अग्निहोत्रे सोमस्यापि द्रव्यत्वेन तत्र 'देव-सोमे'ति मन्त्रलिङ्गविरोधाभावाच्च 'हुत्वा महदभिवीक्षत' इत्यत्र महच्छब्देन हुतद्रव्यमेव प्रमाणाधिकमुच्यत इति रूद्रदत्तः।

ग्रहणमन्त्रे तु त्वाशब्दस्य गृह्यमाणवस्तुपरत्वसम्भवेन सोमरसादन्यत्र विनियोगेऽपि न लिङ्गविरोधः। एवञ्चामन्त्रके उत्तरपरिग्रहार्थं "स्फ्यमादाये"ति विहितं स्फ्यादानादौ ग्रहणमन्त्रस्य उत्कर्षसम्भवाच्च।

यद्युच्येत एवं ग्रहणावेक्षणमन्त्रयोर्ग्रहणावेक्षणनियमकल्पनभिया लिङ्ग-प्रकरणाभ्यामैन्द्रवायवग्रहणादिविषयकत्वकल्पने समाख्यामन्त्रपाठक्रमौ बाध्येयाताम्। तद्वरं समाख्या, स्थानानुग्रहाय भक्षणार्थं हविष्येव ग्रहणावेक्षणनियमः कल्प्यते। प्रमाणमूलस्य कल्पनागौरवस्यादोषत्वात्।

अत एव निषादस्थपत्यधिकरणे सामानाधिकरण्यात्मकवाक्यानुग्रहाय विद्याप्रयुक्तिकल्पना सह्यते। अन्यथा कल्पनालाघवाय तत्र षष्ठीसमासाश्रयण-प्रसङ्गादिति। हन्तैवं स्थानसमाख्यारक्षार्थं भक्षणीये सोमे ग्रहणावेक्षणनियम-मिच्छता ताभ्यां बलीयः प्रकरणं रक्षितुमवघातमन्त्रे किमिति प्राकरणिकावघात-नियमाक्षेपकत्वं नेष्यते? तस्माद्दुस्तरा ग्रहणावेक्षणमन्त्रप्रतिबन्दी।

ननु प्रधानप्रत्यासत्तिलिप्सया तण्डुलेष्वेव कल्प्यमानोप्यवघातः कल्प्येत। तत्र व्रीहिविषयत्वाय विधिरावश्यक इति चेन्न-तण्डुलीभवनार्थाक्षिप्ता-वघातविषयत्वे सम्भवति तण्डुलावस्थायामवघातान्तराक्षेपकत्वस्य मन्त्रेऽ-सम्भवात्।

न च 'त्रिष्फली कर्तव्या' इति सम्प्रैषसिद्धोऽन्योऽप्यवघातस्तण्डुला-ग्रतोऽस्त्येवेति वाच्यम्। तस्य 'देवेभ्यश्शुन्धध्वमि'ति मन्त्रस्यापि विद्यमानतया तत्र तस्य निवेशासम्भवात् मन्त्रापेक्षे प्राथमिकावघाते सति तं समुल्लंघ्य, मन्त्र-निरपेक्षतण्डुलावघातविषयत्वकल्पनाया अयुक्तत्वात्।

ननु फलीकरणावस्थायाः पूर्वं विश्लिष्टेषु तुषोपवापादपि पूर्वं विशिष्टतुष-संवलिततण्डुलेषु अवघातः क्रियते। एवं हि प्रधानप्रत्यासत्तिरप्यस्ति अवघा-तस्य। व्रीह्यपेक्षया तण्डुलानां प्रधानप्रत्यासन्नत्वात् सतुषेष्ववघातकल्पनात्। तुषोपवापमन्त्रक्रमोऽपि रक्षितो भवति। अन्यथा-वितुषेष्ववघाते अवघातमन्त्रात् परमाम्नातस्य तुषोपवापमन्त्रस्य तन्मन्त्रात्पूर्वं प्रवृत्तौ क्रमविघातापत्तेरिति चेत्।

किमिदानीमवघातो दृष्टार्थः ? वैतुष्यार्थात् फलीकरणार्थाद्वाप्यवघाता-दन्यस्य तदुभयमध्यवर्त्यवघातस्य दृष्टप्रयोजनाभावात्। अथ भवत्वदृष्टार्थ-ताप्यवघातस्य। तथापि तमेवाङ्गीकुर्मः प्रधानप्रत्यासत्तिलाभायेति चेत्। हन्तैवं "व्रीहीनवहन्ती"ति नियमविधिः सम्पन्नः। तस्यादृष्टार्थवघातविषयत्वे अपूर्व-विधित्वापातात्। ननु कल्प्यावघात एवादृष्टार्थोऽभ्युपेयते। प्रत्यक्षविधिविधेयस्तु व्रीहिश्रुत्या व्रीहिविषय एव स्यात् इति चेन्न-अपूर्वीयलक्षणायास्तवावश्यकतयाऽ-वघातविधेर्हविःप्रकृतिद्रव्यं व्रीह्यादीत्यर्थकत्वे तत्रापि प्रधानप्रत्यासत्तिलिप्सया तण्डुलावस्थायामेवावघातस्य प्राप्तिप्रसङ्गात्।

किञ्चैवमितोपि प्रत्यासत्त्यनुग्रहाय "त्रिष्फलीक्रियमाणानामि"ति प्रक्षाल-नादप्यनन्तरमपूर्वमवघातस्स्यात्। यदि मतमुपवापमन्त्रपाठविघातभिया तया नाङ्गीक्रियत इति, तथापि प्रत्यक्षविधिनापि तुषमिश्रिततण्डुलावघातस्स्या-देव। तस्मात् दृष्टप्रयोजनाविघातेनैव प्रधानप्रत्यासत्तिरनुग्राह्या। तथा च यस्या-मवस्थायां क्रियमाणोऽवघातोऽदृष्टार्थ एव भवति तदवस्थावघातमेव मन्त्र आक्षिपेत्। स च फलीकरणार्थावघातो वा स्यात्, वैतुष्यार्थावघातो वा। तत्रा-प्यन्यमन्त्रावरुद्धे स्वसमावेशस्य क्लिष्टत्वात् फलीकरणावघातमप्युल्लङ्घ्य स्वान्व-ययोग्यं वैतुष्यफलकं व्रीह्यवघातमेवाक्षिपेन्मन्त्रः। एवं च प्रधानप्रत्यासत्तिः कस्याप्यबाध एवानुग्राह्या। प्रकृते चावघातप्रयोजनबाधभयादुपेक्ष्या। अत्रापि भवदुदाहृताधिकरणमेव साक्षि। तत्रापि हि 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'ति वाक्यावगतपशुसाहित्याबाधार्थमेव सर्वपशुषु स्वस्वाङ्गानां षोडशक्षणपर्यन्त-व्यवधानाङ्गीकारात्। अन्यथा अन्यबाधेऽपि प्रधानप्रत्यासत्तेरावश्यकत्वे तत्र सर्वपशूनां स्वस्वाङ्गैरेकैकक्षणव्यवधानस्यानङ्गीकार्यत्वप्रसङ्गात्।

अपि चैवंविधस्थले प्रधानप्रत्यासत्तिलिप्सायां सत्यामपि "व्रीहिन् प्रोक्ष-ती"ति विधौ तत्रापूर्वीयलक्षणाङ्गीकर्तुस्ते प्रोक्षणस्य सर्वथैवादृष्टार्थस्य तण्डुल-विषयत्वेऽपि दृष्टप्रयोजनविघातभयाभावाद्व्रीहिप्रोक्षणं न कथञ्चन सिध्येत्। तण्डुलावस्थायामपि भवत्कल्पिततुषमिश्रिततण्डुलावघातात्पूर्वं प्रोक्षणे प्रोक्षणा-वघातमन्त्रपाठक्रमविरोधप्रसक्तेरप्यभावात्। तस्मादपूर्वीयलक्षणां प्रधानप्रत्यासत्ति-लोभं च हित्वा, श्रुत्यनुसारेण निर्वापप्रोक्षणयोर्व्रीहिविषयत्वे तण्डुलार्थापेक्षित-एवावघातो मन्त्रापेक्षी मन्त्रेण नित्यवदाम्नेतेन नियम्यत इति व्रीह्यवघात-सिद्धेनार्थो 'व्रीहीनवहन्ती'ति विधिना।

किंचावहन्तीति द्वन्द्वसम्पादनविध्यन्तर्गतवाक्यबलादपि नित्यावघात-सिद्धौ तत्रैव मन्त्रस्यापि सम्बन्धेन नियमानाक्षेपकत्वेऽपि अवघातनियम-

विध्यानर्थक्यमेव। सति प्रकृतिविधौ अवघातेऽध्वर्युः कर्ता, अन्यथा यजमान इतीयानेव विशेष इति सर्वथा "व्रीहीनवहन्ती"ति न नियमविध्युदाहरणम्।

अथ तण्डुलीभवनार्थोऽवघातः प्रयोगमध्ये नानुष्ठेयः। लोकसिद्धतण्डुलस्यैव ग्रहणात्। मन्त्रलिङ्गाद्विधिकल्पनपक्षे निर्वापादिविधेरप्यभावेन मन्त्रकल्प्यनिर्वापादेरपि प्रधानप्रत्यासत्तिलिप्सया तण्डुलविषयत्वात्। तथाचावघातमन्त्रस्तण्डुलावघातमेवाक्षिपेदिति चेन्न।

अवघातविधिर्नियमविधिर्वा न वेति विचारे एतस्यैकस्यैव विधेरप्रवृत्ति सम्भाव्यावघातनियमप्राप्त्यप्राप्ती द्रष्टव्ये, न तु निर्वापप्रोक्षणादिविधीनामपि अप्रवृत्तिः सम्भाव्या। अन्यथाऽतिप्रसङ्गात्। गर्दभरशनाग्रहणविधेः 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति विधेरप्रवृत्तौ मन्त्रस्योभयत्र प्राप्त्याभावेन प्रसिद्धपरिसंख्याविध्युच्छेदप्रसंगात्। मन्त्रलिंगाद्विधिकल्पनपक्षे मयैवमुक्तमिति चेत्। तत् किं मया सर्वत्र मन्त्रलिंगादेव विधयः कल्प्याः। न श्रूयमाणाः क्वापि पुरस्कार्या इत्युक्तम्? किं तर्हि प्रकृतविध्यभावेऽपि अवघातस्य मन्त्रलिङ्गस्य विनियोजकत्वेन विध्यभावस्थले क्लृप्तस्य सत्वेन तत एवावघातनियमः सिध्यतीत्युच्यते। तत्र यत्किञ्चिदेव कथितं एतद्व्रीहिविषयनिर्वापस्यासम्भवादिति, किञ्च यदि प्रत्यासत्तिलिप्सया मन्त्रलिङ्गकल्प्यो निर्वापादिस्तण्डुलावस्थायामेव प्राप्नुयात्तर्हि परिवापविधयो विरुध्येरन्। व्रीह्यवस्थायां पाक एव लाजसम्भवात्। तण्डुलपाके तु धाना एव स्युरिति।

न च तण्डुलद्रव्यकयागे लोकसिद्धस्य तण्डुलस्यैव परीवापहविष्केऽपि लोकसिद्धपरिवापस्यैवोपादानात् तण्डुलेषु श्रपणाप्रवृत्त्या तन्मुखप्रवृत्तिकस्य "व्रीहिभिर्यजेते"ति शास्त्रस्याप्यप्रवृत्त्या लोकसिद्धतण्डुलग्रहणेऽपि परिवापेषु श्रपणसम्भवेन चरुष्विव "व्रीहिभिर्यजेते" त्यस्य प्रवृत्त्यवश्यं भावे लोकसिद्धपरिवापग्रहणायोगात्।

अथ चोदकप्राप्तो निर्वापादिः परिवापाविघाताय विकृतौ प्रत्यासत्तिस्वारस्यं त्यक्त्वा, व्रीह्यवस्थायामेवानुष्ठीयत इति चेत्। न। तथा सति निर्वापादेरप्राकृतकार्यत्वप्रसंगात्। तथा च तस्य व्रीह्यवस्थायां क्लृप्तोपकारकत्वाभावेनातिदेशस्यैवानापत्तेः। मन्त्रलिङ्गस्य निर्वापाद्यनुष्ठापकस्य प्रकृतिविकृत्योर्वैरूप्यप्रसङ्गाच्च। तस्मात् परिवापाविघाताय प्रकृतावेव प्रत्यासत्तिस्वारस्यं त्यक्त्वा व्रीह्यवस्थायामेव निर्वापादिस्तन्मन्त्रलिंगैरनुष्ठाप्य इति नार्थो "व्रीहीनवहन्ती"ति विधिना।

अपि च "व्रीहिभिर्यजेते"ति व्रीहिपदे उपादेयपरेऽपूर्वीयत्वलक्षणाभावेन जात्यवस्थाविशिष्टव्रीहिविधायक इति नवमश्लोकावतारिकायां सम्यगुपपादितम्।

तत्र यदि तण्डुलावस्थायामेव निर्वापादिः क्रियते, तदा व्रीह्यवस्थोपादापकं व्रीहिशास्त्रं तिरस्कृतं स्यादिति व्रीहिशास्त्रानुसारार्थमपि प्रधानप्रत्यासत्तिं हित्वा व्रीहीनेव निर्वपेन्न तण्डुलानिति नार्थो "व्रीहीनवहन्ती"ति नियमविधिना।

यत्तु "व्रीहिन् प्रोक्षती"ति अपूर्वविधिरेव, ऐन्द्राग्नीयव्रीहिविषयत्वात्। तत्र मन्त्रवर्णकल्प्यप्रोक्षणसम्भवादिति। तदपि न। "व्रीहीन्निर्वपति" 'व्रीहीन् प्रोक्षति' "व्रीहीनवहन्ती"ति आग्नेयाग्नीषोमीयैन्द्राग्नव्रीहिसाधारण्येन प्रवृत्त-विधिप्रायपाठात् तत्सारूप्यायास्यापि सर्वव्रीहिविषयत्वस्यैव वक्तव्यत्वात्। अङ्गी-कृतं खलु "प्राय वचनाच्च" इत्यत्र "शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदय-मुपांशुयाजः, पादावग्नीषोमीय" इत्यत्र प्रधानप्रायपाठात्, तद्वैरूप्याय उपांशु-याजस्य प्राधान्यमिति। किं च नित्यवच्छ्रुतस्य प्रोक्षणविधेः कादाचित्कैन्द्राग्न-विषयत्वानांजस्याच्च।

ननु साधारण्ये अप्राप्तविषयत्वासम्भवरूपबाधकबलादनुवादमात्रत्वे आनर्थक्यप्रसङ्गाच्च ऐन्द्राग्निविषयत्वमङ्गीक्रियत इति चेत्। तथापि वक्ष्य-माणरीत्या अध्वर्युनियमार्थत्वसम्भवे अपूर्वविधिगौरवस्य, प्रायपाठस्वारस्यादि-भङ्गस्य चायुक्तत्वात्। कथं तर्हि ऐन्द्राग्नेः प्रोक्षणं मन्त्राभावादिति चेत्। कथं तर्हि तवापि प्रोक्षणमन्त्रानुष्ठानमतदभावादेव। आचारात्प्राप्तिरिति चेत्, तुल्यं प्रोक्षणेऽपि। ऊहेन मन्त्रप्राप्तिरिति चेत्। तुल्यम्। प्रकृतावूहायोगान्न प्रोक्षण-मिति चेत्। तुल्यं मन्त्रेऽपि।

मा भूत् प्रोक्षणमन्त्रस्तदभावेऽपि यथाकथंचित् स्मृत्वा प्रोक्षणमनुष्ठेयमिति चेत्। तर्हि माभूत्प्रोक्षणमपि। तदभावे बाधकाभावात्। अङ्गत्वेनानिश्चित-स्यानुष्ठानेऽपि अग्निहोत्रे प्रयाजाद्यननुष्ठान इव वैगुण्यकल्पकस्याभावात्।

अथ दृष्टाचारानुरोधात् प्रकृतावपि अन्यद्रव्यधर्मोऽन्यत्रोह्यते फलचमस इव सोमधर्मः। फलचमसवत् ऐन्द्राग्नद्रव्यस्यापि कादाचित्कत्वादित्यपि मन्त्र-प्रोक्षणयोः समानम्। यदि तु मन्त्रविधिरस्ति, तदा तत एव प्रोक्षणमपि सुलभम्।

यत्त्वत्र "यथा दैवतमेवैनान् प्रोक्षती"ति विधिना ऐन्द्राग्नप्रोक्षणमित्युक्तम्। तदयुक्तम्, तस्य 'अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यामित्याहे'ति मन्त्रविधि-शेषार्थवादत्वेन विधित्वाभावात्।

यच्चोक्तं "यथा देवतमेवैनानि"इति विधिरेव "व्रीहीन् प्रोक्षती"त्यनेनोप-लक्ष्यत इति, तदप्ययुक्तम्, "एनानि"तिपदस्य सन्निहितमन्त्रगतवःपदार्थपरा-मर्शिनः व्रीहिपरत्वे मानाभावेनातिरिक्तार्थकव्रीहिपदघटितविधिवाक्येन उप-लक्षणायोगात्। तस्मात् मन्त्रालिङ्गकल्प्यं प्रोक्षणमवहननं च व्रीहिष्विव

यवेष्वपि स्यादिति यवपरिसंख्यार्थावेवैतौ विधी। तत्र यदुक्तमेतेनेत्यादिना प्रधानप्रत्यासत्तिलिप्सया मान्त्रवर्णिकप्रोक्षणादेस्तण्डुलेष्वेवाप्त्या यवसाधारण्याभावे ततः परिसंख्या न युज्यत इति, तदप्येतेनैवापास्तम्, प्रधानप्रत्यासत्तेरीदृशस्थलेष्वनादरणीयत्वस्य व्यवस्थापितत्वात्।

किंच कल्प्यप्रोक्षणादेर्यवतण्डुलसाधारणत्वेऽपि यवतण्डुलात्प्रोक्षणादिपरिसंख्यार्थं प्रकृतविधिप्रवृत्तिसंभवात्। यद्यपि यथाश्रुते व्रीहियवतण्डुलयोः प्रोक्षणादिव्यावर्तकत्वेऽपि व्यावर्त्यप्रोक्षणादेर्व्रीहिष्वप्राप्ततया नानयोः परिसंख्याविधित्वं सम्भवति, 'तत्र चान्यत्र च प्राप्ते' इति तल्लक्षणात्। किन्त्वप्राप्तविषयत्वेनापूर्वविधित्वमेव स्यादिति। तथापि अवघातविधेरप्यपूर्वविधित्वापत्त्या सिद्धान्त्यभिमतनियमासिद्धेः "अत्र ह्येवावपन्त्यत एवोद्वपन्ती"ति प्रसिद्धपरिसंख्याविधाविव परिसंख्येयस्य विध्युद्देश्ये अप्राप्तावपि व्यावर्त्यस्थले प्रकृतविध्यभावे प्राप्तिं प्रकृतविधिसद्भावे व्यावृत्तिञ्चालोच्यैव "यः स्यात् कस्यापि बाधः स भवति परिसंख्येति रीतिं च कृत्वे" ति सिद्धान्तोपक्रमे वक्ष्यमाणरीत्या प्रोक्षणादिविध्योः परिसंख्यात्वसम्भवात्।

"अत्र ह्येवावपन्ती" त्यत्रावापस्य व्यावर्तनीयेषु स्तोत्रान्तरेष्वेव प्राप्तिः। नत्वत्र शब्दनिर्दिष्टेषु पवमानगतगायत्र्यादिषु प्रकृतविध्युद्देश्येष्विति मूल एव सविस्तरं प्रतिपादितम्।

अपि च व्रीहिपदस्य लक्षणया हविःप्रकृतिपरत्वात्तत्रापि भवदभिमतप्रधानप्रत्यासत्तिलाभाय प्रकृतप्रोक्षणादेर्व्रीहितण्डुलविषयत्वे यवतण्डुलेभ्यः परिसंख्यायाः सुलभत्वात् यद्व्रीहिशास्त्रेण व्रीहीणां हविःप्रकृतित्वमवगतम्, यच्च यवशास्त्रेण यवानां हविःप्रकृतित्वम्, तस्यैव "व्रीहीन् प्रोक्षती" त्यादिवाक्यगतव्रीहिशब्देन पदप्रत्यभिज्ञानोपबृंहितेन लक्षणीयत्वे "व्रीहितण्डुलान् प्रोक्षेदि"त्याद्यर्थे प्रकृतविध्योः पर्यवसानात्। इयं च रीतिरस्माभिरपूर्वीयलक्षणाक्षेपे विशदमुपपादितेति, इह संक्षिप्ता।

न चात्र प्रोक्षणादिस्वरूपपरिसंख्या वा तन्नियमपरिसंख्यावेतिं निश्चयासम्भवात् परिसंख्यात्वपक्षस्त्यक्तव्य इति वाच्यम्। "नोचेत् प्राप्त्यै नियत्यै कथमपि च भवन्नप्रसिद्धोऽपि स स्यात्" इति बहुधा "इमामगृभ्णन्रशनामि"ति परिसंख्याभंगः स्यादिति प्रतिबन्द्या मूल एव समाहितत्वात्।

यत्तु—यवेषु मान्त्रवर्णिकप्रोक्षणादेरत्यन्तबाधपरिहाराय स्वरूपपरिसंख्यामिव पाक्षिकबाधस्यापि परिहाराय नियमपरिसंख्यामपि त्यक्त्वा "व्रीहीनि"ति द्वितीयायां साधनलक्षणामाश्रित्य "व्रीहिभिः प्रोक्षेदि"ति अर्थकर्मतैवाश्रयणीया इति, तन्न। प्रसिद्धपरिसंख्याप्रतिबन्द्यैव दत्तोत्तरत्वात्। गर्दभरशनायां मन्त्रस्यात्यन्तपाक्षिकबाधाभावायाश्वाभिधानीगुणकमन्त्रकरणकादानविधिसम्भवात्।

नन्वेवमादानमदृष्टार्थं स्यादिति चेत्तुल्यमवहननेऽपि। सामवायिकांगत्वं स्यादादानस्येति चेत्तदपि तुल्यं, प्रकृते श्रुत्यनुसारादापतन् बाधो न दोषाय। अन्यथा—"नागम्यां गच्छेत्, न ददाति न जुहोती"त्यादिलौकिकवैदिकप्रमाणप्रापिताबाधाय नञो लक्षणया अर्थान्तरस्वीकारापत्तेरित्याद्यपि तुल्यं प्रकृते इति कृतं विस्तरेण।

तस्मात् दुरूहा प्रसिद्धपरिसंख्या प्रतिबन्दी। अत्र प्राप्ताप्राप्तपरिसंख्ययोस्त्रैदोष्यं न भवद्भिरंगीकृतमित्युक्तम्। नैतदेवम्। किन्तु प्राचीनैरुक्तस्त्रैदोष्योपपादनप्रकारो न साधीयानतिप्रसंगावहत्वादित्येव पूर्वपक्षावसरीयापादनस्य तात्पर्यमिति स्पष्टमेव। एतादृशं बहु तत्र तत्रोच्यते। तत्सर्वं स्फुटपरिहारत्वात्, ग्रन्थगौरवभयाच्च न निराक्रियते। एवमेव मन्दशंकासु, अल्पप्रयोजनशंकासु चानिराकरणमिति द्रष्टव्यम्।

न चैवं परिसंख्यापेक्षया प्रोक्षणविधेरैन्द्राग्नप्रोक्षणविषयतयाऽपूर्वविधित्वमेवास्त्विति वाच्यम्। शाखान्तरीयमन्त्रप्राप्तार्थकत्वेन तत्र विध्यसम्भवस्योक्तत्वात्। ततोऽपि लाघवायाध्वर्युकर्तृनियमविधेरेवांगीकृतत्वात्। तथाहि—मन्त्रलिंगकल्प्यप्रोक्षणविधावाम्नाते आम्नाननिमित्ताध्वर्युसमाख्यानाभावेन प्रोक्षणे यः कश्चिदनियतः कर्ता स्यात्। सति तु प्रत्यक्षविधौ समाख्ययाऽध्वर्युरेव कर्ता स्यादिति प्रोक्षणविधिर्नियमविधिः।

## इति नियमविधिदूषणम्।

एवमवहननविधिरपि परिसंख्यापेक्षया लाघवायापूर्वविधिरित्याश्रितः। नियमस्यासम्भवात्।

"वत्सं चोपावसृजति, उखाञ्चाधिश्रयत्यवहन्ती" त्याद्यनुक्रम्य "एतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि सम्पाद्य यजेत"इति याजमानकाण्डविधिना यजमान एवावहन्ता स्यात्। आध्वर्यवेऽपि काण्डे प्रातिस्विकविधौ सति तु सरूपेण विधीयमानतादशायामपेक्षितप्रधानकर्ताध्वर्युर्द्वन्द्वसम्पादनात्मना विधानाद्यजमानः प्रयोजककर्ता च स्यादिति "व्रीहीनवहन्ती"ति अप्राप्ताध्वर्युप्रापकत्वादपूर्वविधिरिति।

अत्र स्वोपपादितरीत्या विध्योः प्रोक्षणावहननप्राप्तिनियमार्थत्वेऽपि अध्वर्युकर्तृप्राप्तिसम्भवे तादर्थ्यं विध्योरयुक्तमिति वदन्ति । तन्न । प्रोक्षणावघातनियमयोरन्यतः प्राप्तत्वेन तयोर्विध्योरपूर्वनियमार्थत्वस्य निराकृतत्वात् ।

ननु प्रोक्षणावहननयोर्मन्त्रलिङ्गकल्प्ययोः समाख्ययाध्वर्युकर्तृकत्वाभावेऽपि तत्करणभूतयोः "अग्नये वो जुष्टम्, अवरक्षो दिवः" इत्यादिमन्त्रयोः समाख्ययाध्वर्यवत्त्वे निश्चिते, तत्र प्रोक्षामि, वध्यासमित्युत्तमपुरुषवशात्तदनुष्ठाप्यकर्मणोरपि तत्कर्तृकत्वावश्यम्भावेनार्थादध्वर्युकर्तृकत्वसिद्धेः प्रोक्षत्यवहन्तिशास्त्रयोरध्वर्युनियमप्राप्त्यर्थत्वाभावाद्वैयर्थ्यमिति चेत् ।

अत्र यद्यपि दीक्षितेन्द्रै रेवापूर्वीयत्वलक्षणाक्षेपश्लोकावतारिकायां स्वयमेवेमामाशंकामुद्भाव्य, "एवं तर्हि प्रोक्षणावहननविध्योः प्रथममुपपादितं यवपरिसंख्यार्थत्वमेवास्त्व"ति ग्रन्थेन समाहितत्वान्न मया किंचित्समाधतव्यमस्ति ।

न च तथा सति परिसंखयत्वापेक्षया लघुत्वादैन्द्राग्नहविः प्रोक्षणविध्यर्थतयापूर्वविधित्वमेवास्त्विति वाच्यम् ।

एवमपि "अवरक्ष" इत्यादिमन्त्रस्य लिङ्गाविशेषेण ऐन्द्राग्नसाधारणावहननाक्षेपकत्वेन अवधातविधेः परिसंख्यार्थत्वस्य वज्रलेपतया तदंशे भवतामिष्टसिध्यभावात् । ऐन्द्राग्ने "इन्द्राग्निभ्यां वो जुष्टं प्रोक्षामी"ति मन्त्रस्य याज्ञिकैरुच्यमानतया तत एव तत्रापि प्रोक्षणस्य प्राप्तिसम्भवात् !

न च तत्र प्रोक्षणविधौ सत्येव तादृशमन्त्रप्राप्तिरिति वाच्यम् । तादृशमन्त्रस्य काण्वपाठे प्रोक्षणमात्रेण स्वप्रकाशकमन्त्राक्षेपासम्भवात् । तदनुष्ठानस्य ग्रहणकवाक्यादिनैव सम्भवात् । तस्मात् पूर्वोक्तप्रायपाठादिना च प्रोक्षणविधेरैन्द्राग्नविषयत्वस्याप्यसम्भवादगत्या परिसंख्यार्थत्वस्यैव प्राप्तेश्च ।

तथापि यदि स्वयमपरित्यक्तस्यापि प्रकृतविध्योर्नियमापूर्वार्थत्वस्य सकृद्भावितत्वात् साधनीयत्वनिर्बन्धः, तर्हि तदपि साध्यते—"व्रीहीनवहन्ती"ति तावदपूर्वविधिरेव । एतदभावे द्वन्द्वसम्पादनविध्यनुसारेणाऽवहनने यजमानकर्तृकस्यैव प्राप्तेः ।

न चाध्वर्यवावघातमन्त्रोत्तमपुरुषबलात् अध्वर्युरेव स्यादिति वाच्यम् । उत्तमपुरुषवशान्मन्त्रोच्चारणावघातयोरेककर्तृकत्वमात्रप्राप्तावपि अवघाते यजमानकर्तृकत्वानपायात् मन्त्रस्यापि यजमानेनैव वक्तव्यत्वादवघातकर्त्रनुग्रहाय तन्मन्त्रकर्तृबाधस्य न्याय्यत्वात् । "प्रधानगुणानुग्रहयाङ्गगुणबाधनस्य"अङ्ग-

गुणविरोधे च तादर्थ्यादि"त्यधिकरणेऽङ्गीकृतत्वादेवमुत्तमपुरुषमनुगृह्य अवघातविधेरपूर्वविधित्वं दर्शितम् ।

## प्रोक्षणविधेर्नियमविधित्वोपपादनम् ।

एवं प्रोक्षणविधिर्नियमविधिरेव । एतदभावे प्रोक्षणस्य मन्त्रलिङ्गोन्नीत-विधिविधेयस्य समाख्यानाभावेनाध्वर्य्वाद्यप्राप्तौ यजमान एव प्रोक्षणे कर्ता स्यात् । तेनैव सांगस्य कर्मणश्चिकीर्षितत्वात् । स हि यद्यदृत्विजः समाख्यान-वचनादिभिः कुर्वन्ति । तत्सर्वं तैः कारयति । तैरक्रियमाणं तु प्रोक्षणादिकं दक्षिणादानहविस्त्यागादिवत् । स्वयं करोति । तदननुष्ठाने यजमानस्यैव फलभंगात् ।

किञ्च "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति प्रधानविधिना स्वर्गकामं यजमानं प्रति साङ्गप्रधानस्य विहितत्वात् प्रधान इवांगेष्वपि सर्वेषु सामान्यतो यजमानस्य कर्तृत्वं प्राप्तमेव । तद्यत्र यत्राङ्गे परिक्रीतानामृत्विजां कार्यापेक्षाणां समाख्यादिना कर्तृत्वं विशिष्य प्राप्तम् । तत्र प्रयोजककर्तृत्वेन व्यवतिष्ठते । यत्र नर्त्विजां प्राप्तिः, तत्र साक्षात्कर्तृत्वमेव व्यवतिष्ठत इत्यतोऽपि प्रोक्षणे यजमान एवं चात्रापि पूर्ववन्मन्त्रोऽपि यजमान एव स्यादिति न मन्तव्यम् , अंगगुण-विरोधन्यायाविषयत्वात् । यत्र हि अंगप्रधानसम्बन्धकृत एव गुणयोर्विरोधः, तत्रैव च तन्न्यायः । यथा दीक्षणीयासोमकालयोः । तत्र हि "य इष्ट्या पशुना सोमेन वा यजेत, सोमावास्यायां पौर्णमास्यां वा यजेते"ति विधिना विहितपर्व-कालो गुण–प्रधानयोः । न च तत्र गुणविधायकप्रमाणयोः कश्चिद्विशेषः, एक-त्वात् । "एका दीक्षा ज्योतिष्टोमस्ये"ति पक्षे तयोर्विरोधोऽप्यस्ति ।

यत्र त्वङ्गप्रधानगुणयोर्विरुद्धयोरपि शीघ्रमन्थरप्रवृत्तिकप्रमाणप्रापि-तत्वम्, तत्राङ्गगुणविरोधन्यायो नावतरति । यथा सप्तदश शरावचरौ । तत्र प्रधानस्य चरोः पुरोडाशस्थानापन्नस्यातिदेशिकमश्वशफपरिमाणं गुणः । तद-र्थस्य तु शरावस्य औपदेशिकं साप्तदश्यम् । तत्र सप्तदशशरावपरिमितद्रव्येण च चरुः क्रियमाणो महान् भवति । नाश्वशफपरिमाण इति गुणयोर्विरोधोऽ-प्यस्ति । अत्रौपदेशिकस्यैव सप्तदश शरावत्वस्य शीघ्रप्रवृत्तिकप्रमाणप्रापितत्वात् तेनातिदेशिकम् अश्वशफपरिमाणं प्रधानगुणोऽपि बाध्यते ।

एवं च यद्यपि प्रकृते प्रोक्षणे कर्तुर्यजमानस्य प्रधानविधिश्रुतिप्रापि-तत्वात् । मन्त्रकर्तुरध्वर्योश्च समाख्याप्राप्तत्वात् अंगगुणविरोधन्यायानवतारेऽपि शीघ्रप्रवृत्तिप्रमाणबलवत्वन्यायेनैवाध्वर्युर्यजमानेन बाध्येतेति प्रतीयते । तथापि नैकान्ततो यजमानेनाध्वर्युर्बाध्यत इति शक्यमध्यवसातुम् ।

तथाहि श्रुतिप्रापितोऽपि यजमानः प्रोक्षणज्ञानानन्तरमेव प्रोक्षणकर्तेति निश्चीयेत। प्रोक्षणज्ञानं च मन्त्रज्ञानाधीनम्। न चात्रान्यतरकर्तृज्ञानानन्तरमन्यतरकर्तृज्ञानमिति ज्ञानयोः पौर्वापर्यं केनचित् शक्यमध्यवसातुम्। एवं च यदि कदाचित् मन्त्रेण प्रोक्षणमाक्षिप्य तत्र कर्तारं निश्चित्य पश्चात् मन्त्रे क एवंभूतप्रोक्षणप्रकाशनार्थं मन्त्रमनुतिष्ठेदिति प्रतिसन्धानानुसारेण कर्तारमक्षिपेत्। तत्र यजमानेनाध्वर्युः पश्चादवगतो बाध्येत। यदि तु मन्त्रं दर्शपूर्णमासप्रकरणगृहीतत्वमात्रेणावश्यानुष्ठेयं मत्वा तदैव समाख्ययाध्वर्युं कर्तारं निश्चित्यायमध्वर्युप्रयोज्यो मन्त्रः किं प्रयोजनाय प्रयोक्तव्य इत्याकांक्षया प्रकाश्यं प्रोक्षणं कल्पयित्वा ततः तत्कर्तारं निश्चिनुयात्, ततोऽध्वर्युरेव यजमानं बाधेत। एवं च नियामकाभावादध्वर्यु–यजमानयोर्विकल्पे प्रोक्षणविधिर्नियमार्थ इति सूक्ष्मया दृशावधातव्यम्।

एवं वा—यथामूलमेवास्तु। अवहनने यजमानस्यैव प्राप्तावध्वर्योर्विधिरिति। न च उत्तमपुरुषवशाद् 'अवरक्ष' इति मन्त्रं प्रयुञ्जान एवावहन्यादिति वाच्यम्। समाख्यानादवघाततन्मन्त्रयोर्यजमानाध्वर्यू व्यवस्थितौ, उत्तमपुरुषमात्रस्य तद्भञ्जकत्वायोगात्। यथा यजमानफलं वर्च आदि प्रकाशयत एव मम शब्दघटितस्यापि "ममाग्नेवर्चो विहवेष्वस्त्वि"त्यादिमन्त्रस्य अध्वर्युणैव प्रयुज्यमानत्वेऽपि 'स्वामिनि विजयमाने वयं विजयिन' इति भटव्यवहारानुरोधेन परिक्रीतानामात्मनि स्वाम्यभेदाध्यवसायस्य दृष्टत्वेन मम शब्दस्य न विरोधः इत्यङ्गीकृतं "ऋत्विक्फलं करणेष्वर्थवादित्वादि"ति तार्तीयाधिकरणे भाष्यकृता। तद्वदत्रापि 'वध्यासमि' त्युत्तमपुरुषस्याध्वर्युच्चार्यमाणत्वेऽपि विरोधाभावात्। एवं च कस्यापि कर्तुरविरोधादवहननविधिरध्वर्युप्राप्त्यर्थ एव।

एवं प्रोक्षणविधिरपि कर्तृनियमार्थः। तत्राप्युपरोक्तरीत्या आक्षिप्ते प्रोक्षणे समाख्यानाभावात्। अनियतानेककर्तृप्राप्तौ नियमविध्यवकाशसत्वात्।

ननु यजमानाभेददृष्ट्या 'वध्यासमि'ति ब्रुवन्नपि ऋत्विजां परस्पराभेदकारणाभावेन होत्रादिना प्रोक्षणे क्रियमाणे तत्करणमुत्तमपुरुषलिङ्गिनं च मन्त्रमध्वर्युः कथं ब्रूयादिति चेत्। ब्रूयादेवेति ब्रूमः। एकप्रयोजनानां परस्परमैक्याध्यवसायसम्भवात्। कथमन्यथा—"शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम्, उभा हि वां सुहवाँ जोहवीमि, त वाजं सद्य उशते धेष्ठा" इत्यादीनध्वर्युक्रियमाणपदार्थस्मारकान् मन्त्रान् होता ब्रूयात्। तस्मात् प्रोक्षणावहननविध्योर्नियमापूर्वविधित्वे न किञ्चिद्बाधकमुपन्यस्तम्।

## अथ परिसंख्याविधिलक्षणदूषणम् ।

"एवंचाश्वाभिधानीग्रहणविधिरपि तत्कर्तृनैयत्यमात्रप्राप्त्यर्थः "पर्यंवस्येदि" त्यादिश्लोकेन "इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त" इति प्रसिद्धपरिसंख्याविध्युदाहरणमयुक्तम्, मन्त्रविधिपरत्वाभावात् । मन्त्रानुवादेन ग्रहणविधिपरत्वात् । तथा सत्येव समानपदोपात्तधात्वर्थविधिसम्भवात् । अश्वबन्धनविध्याक्षेप्यस्यापि विधाने रशनाग्रहणस्याध्वर्यवसमाख्ययाध्वर्युकर्तृनियमसिद्धेः, अन्यथा मन्त्रविधिपरत्वेऽश्वाभिधानीग्रहणस्योद्देश्यत्वे विशिष्टोद्देशदोषापातादिति सविस्तरमाक्षिप्तम् ।

अत्र केचित् परिहरन्ति—"इमामगृभ्णन्नि"ति मन्त्रविधिरेव, न ग्रहणविधिः, तत्फलस्य कर्तृनियमस्यान्यतः सिद्धत्वात् । "प्रकृतं वाजिनं नाद्रवेत्यश्वमभिदधाती"ति विहितस्याश्वबन्धनस्यागृहीतया रशनया कर्तुमशक्यत्वात् ।

न च मन्त्रविधौ विशिष्टोद्देशः विधेयान्तरालाभेन वाक्यवैयर्थ्यं मा भूदिति मन्त्रविधेरावश्यकत्वे "आदत्त" इत्यनेनैवाश्वाभिधान्यादानत्वाकारेण उद्देशादिति । तन्न । कर्तृनियमस्यान्यलभ्यत्वादेवान्यगृहीतयापि रशनयान्यकर्तृकबन्धनसम्भवात् ।

न चान्यगृहीतरशनयान्यकर्तृकबन्धनमनपक्रमणफलं दृढं न स्यादिति वाच्यम् । अध्वर्य्वपेक्षयापि चतुरे रशनागृहीतरि केवलाध्वर्युकर्तृकबन्धनादपि सद्वितीयबन्धनस्यातिदृढत्वसम्भवात् । एवं च रशनाग्रहणे अनियमप्रसक्तौ कर्तृनियमार्थग्रहणविधिरेव युक्तः । एवं च समानपदश्रुत्यर्थस्य धात्वर्थस्य च विधौ नियमे च फले सति न वाक्यगम्यस्याधात्वर्थस्य च मन्त्रस्य विधिः परिसंख्याफलो युक्तः । तस्मादत्र विशिष्टोद्देशाभावेऽपि न परिसंख्याविधित्वमिति सिद्धम् ।

यत्वत्र विशिष्टोद्देशो नास्ति । एकेन पदेनादानत्वाकारेण उभयपदमहिम्ना उभयहविरार्तौ हविरार्तित्वेन "तेषान्तरसमयाः सवनीयाः पुरोडाशा" इत्यत्र सवनीयपुरोडाशस्य सवनीयत्वाकारेण "ऐन्द्रवायवाग्रंप्रथममहरि"त्यत्र प्रथमस्याह्नः प्रथमत्वेन च ग्रहादिपदैरुद्देशविशिष्टोद्देशदोषाभावेन ग्रहैकत्वाद्यधिकरणसिद्धान्तभंगापत्तेः ।

न चात्र मन्त्रविध्यभावे वाक्यस्य विधेयान्तराभावेन वैयर्थ्यप्रसंगात् । तत्परिहाराय विशिष्टस्याप्यादानत्वेन उद्देशः क्रियते "यदग्नये चे"त्यादिस्थल

इव तादृशवाक्यवैयर्थ्याभावेन ग्रहैकत्वाद्यधिकरणविरोधाप्रसंगादिति वाच्यम्। "इमामगृभ्णन्नि"त्यत्रापि कर्तृनियमार्थं ग्रहणविधेरुक्तत्वेन वैयर्थ्याभावे आदानश्रुतेर्विशेषसंकोचायोगात्।

यदुक्तं 'यदग्नये चे'त्यादिस्थल इवेति, तत्र पृच्छामि—'यदग्नये च प्रजापतये च सायं जुहोति, यत्सूर्याय प्रजापतये च प्रातरि'ति अग्निहोत्रप्रकरणाम्नातयोर्मध्ये अग्निवाक्ये मन्त्रवर्णप्राप्ताग्न्यनुवादेन होममात्रमुद्दिश्य प्रजापतिविधाने प्रजापतेर्निरपेक्षदेवतात्वापत्त्या समुच्चयासिद्धिप्रसंग इति कथमुच्यते ? निरपेक्षदेवतात्वापत्त्या ह्येकस्यां होमाभ्यासव्यक्तावग्नीषोमयोरिव अग्निप्रजापत्योस्सापेक्षतालक्षणसमुच्चयो न स्यात्। तावन्मात्रस्य चेष्टत्वात्।

यस्तु होमाभ्यासभेदेन प्रवर्तमानयोरग्निप्रजापत्योः शास्त्रदृष्टयैकस्मिन्नग्निहोत्रहोमे समुच्चय इष्यते। तत्र समुच्चये निरपेक्षदेवतात्वस्यानुकूलत्वात् मन्त्रवर्णादग्नेः, प्रकृतवाक्यात्प्रजापतेश्चैकस्मिन् होमे परस्परनैरपेक्ष्येण प्रवृत्तौ प्रमाणद्वयस्याप्यबाधाय होमाभ्यासे 'द्वे आहवनीये जुहोति, चतस्रो गार्हपत्ये, चतस्रोन्वाहार्यपचने, दश सम्पद्यन्ते' इत्युपक्रम्य "य एवं विद्वान् विराट् सम्पन्नमग्निहोत्रं जुहोति' इत्यन्तेन विराट्सम्पत्तिवाक्येनानुमते अग्निप्रजापत्योः पृथङ्निवेशसमुच्चयस्य सुलभत्वात्। तस्मात् समुच्चयो न स्यादित्यसारमुक्तम्।

यदपि तत्राग्निवाक्ये च शब्दसमभिव्याहारात्तदर्थसमुच्चयान्वितस्यैव प्रजापतेर्विधानात्समुच्चयसिद्धिरित्याशंक्य, एवमपि सूर्यवाक्यवैयर्थ्यं स्यात्। समुच्चयप्रतियोगिनोरग्निसूर्ययोर्मन्त्रवर्णादेव प्राप्तत्वादित्युक्तम्। तदपि न। एवं सूर्यवाक्यवैयर्थ्यं माभूदिति अग्निपदसमभिव्याहारस्वारस्यात् अग्निप्रतियोगिकसमुच्चयविशेषितस्यैव प्रजापतेर्विध्यापत्तौ सूर्यप्रतियोगिकसमुच्चयान्वितप्रजापतिविधानेन सूर्यवाक्यस्यापि साफल्यसम्भवात्। अविशेषितसमुच्चयान्वितप्रजापतिविधौ मान्त्रवर्णिकाग्निसूर्यप्रतियोगिकसमुच्चयस्य प्रजापतौ सिद्धावपि प्रतियोगिविशेषविशिष्टसमुच्चयान्वितप्रजापतिविधौ अन्यप्रतियोगिसमुच्चयाप्राप्त्या तत्र विध्यन्तरावकाशसत्त्वात्।

न चैवं सायंकालविवक्षायां प्रजापतेः कालविशेषव्यवस्था न स्यादिति वाच्यम्, इष्टापत्तेः। तस्य सायंप्रातःकालयोर्द्वयोरप्यनुष्ठेयत्वात्। अग्निसूर्यौ तु मन्त्रव्यवस्थया व्यवस्थितावेव।

अथाविशेषितसमुच्चयान्वितप्रजापतिविधायिनैकेन वाक्येन सिध्यतोऽर्थस्य प्रतिवाक्यमधिकविशेषणविशिष्टविधिगौरवमंगीकृत्य वाक्यान्तरसाफल्यसमर्थनमसमंजसमिति चेत्।

तर्हि सायंकालीनत्व-प्रातःकालीनत्वरूपविशेषानादरेण श्रुतिसंकोचमप्य-कृत्वा यथाश्रुताग्निहोत्रहोमानुवादेनाविशेषितसमुच्चयान्वितप्रजापतिविधायिनैक-वाक्येन सिध्यतोऽर्थस्य प्रतिवाक्यं श्रुतिसंकोचेन होमविशेषोद्देशमंगीकृत्य वाक्यान्तरसाफल्यसमर्थनस्यानुपदं क्रियमाणस्यासमंजसत्वं स्यात्।

स्वाध्यायविध्यध्यापितस्य वेदस्य प्रामाण्यं समर्थयितुमेवमुच्यत इत्यस्य मयापि सुवचत्वात्। एवं क्लेशेन विधित्वाश्रयणात्स्तावकत्वाश्रयणमेव वाक्यान्तरे युक्तमित्यस्य तवापि तुल्यत्वात्। वाक्ययोर्विधायकत्वस्तावकत्वविनि-गमकाभावादेवमाश्रयणस्य पक्षद्वयेऽपि तुल्यत्वात्।

किञ्चात्र वाक्ये सायंकालोद्देशेन प्रजापतिर्विधीयताम्। काले साक्षाद्देवता-सम्बन्धाभावात्। तन्निर्वाहार्थं तत्प्रधानहोमे देवतासम्बन्धसम्भवात्। "ऐन्द्र-वायवं गृह्णाती"त्यादिषु ग्रहणे देवतासंबन्धोपपत्तये तत्प्रधानयागे देवतासम्ब-न्धाश्रयणात्। एवं सति सूर्यवाक्यमपि विधायकं भविष्यति।

अपि च विराट्सम्पत्तिवाक्यानुसारेण दशधाभ्यसनीये अग्निहोत्रहोमे आहवनीयाधिकरणकद्वितीयाहुतेस्तस्मात् यजुषाहुतिः पूर्वा होतव्या, 'तूष्णी-मुत्तरे"ति विधिना तुष्णीत्वगुणकत्वे सति 'यत्तूष्णीन्तत्प्राजापत्यमि'तिविध्य-न्तरेण प्रजापतेरपि सिद्धौ वाक्यद्वयमनर्थकमिति यत्किञ्चिदेवोक्तम्। तस्मा-त्सम्प्रतिपन्नोऽग्निसूर्यवाक्ययोर्विशिष्टस्य सामान्याकारेणोद्देशः।

अथ 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्याया'मिति वाक्याभ्यां आज्यभागक्रमाम्नातानां पौर्णमास्यमावास्ययोरव्यवस्थया प्राप्तानां वार्त्रघ्न्यादियाज्यानुवाक्यायुगलानां व्यवस्था क्रियते। तत्र पौर्णमास्यमावास्या-विशिष्टानुवचनोद्देशविशिष्टोद्देशापत्या तदेवानुवचनमेव वचनत्वाकारेण उद्दिश्यत इति चेत्। मैवम्। अव्यवस्थया प्राप्तौ मन्त्रावनूद्य, कालमात्रस्य विधा-नात्तावतैव व्यवस्थासिद्धेः। न च वार्त्रघ्नीत्वाकारेण मन्त्रोद्देशेऽपि विशिष्टो-द्देश इति वाच्यम्। कालस्याप्राप्ततया विधेयत्वेऽप्यनुपादेयतया कालमेवो-द्दिश्य मन्त्रयोरुपपादनात्। उद्दिश्यमानस्यापि कालस्य विधेयत्वं 'य' इत्यादि-वाक्यादिषु क्षुण्णमेव। एवं चात्र वाक्ययोरुद्देश्यविशेषोपपादनतान्निराकरण-प्रकारान्तराणि निराकरणीयानि। तस्मात् क्वाप्यसम्प्रतिपन्नत्वात्। ग्रहैकत्वा-द्यनेकाधिकरणविरोधाच्च। वस्तुतो विशिष्टस्य सामान्याकारेणोद्देशो न युक्तः।

यदपि वस्तुतो विशिष्टस्य सामान्याकारेणोद्देशे क्वापि विशिष्टानुवाद-दोषो न स्यादित्याशंक्य, यत्र वाक्यान्तरवैयर्थ्यम्, तत्रैव श्रुतिसंकोचेन वा, उद्देश्यप्रतीतिपर्यवसानद्वारा उद्देशकोट्यन्तर्गतत्वेन वा विशिष्टानुवादकृतदोष-निरासः, नान्यत्रेत्युक्तम्।

तदयुक्तम्। तथापि इमामगृभ्णन्नित्यत्र वाक्यान्तरवैयर्थ्याभावेन सामान्याकारेण ग्रहणोद्देशानापत्तेः।

अथ वाक्यान्तरवैयर्थ्यमित्यत्रान्तरपदं सम्पातायातम्। अन्यथा कथंचिद्वाक्यवैयर्थ्ये सामान्याकारेणोद्देश इति चेत्, तथापि न प्रकृतसिद्धिः, कर्तृनियमाय ग्रहणविधिपरत्वस्य "इमामगृभ्णन्नि"त्यत्रोपपादितत्वेन वैयर्थ्याभावात्। यत्र युष्मदभिमतस्सामान्याकारोद्देशोऽग्निसूर्यवाक्ययोस्तत्राग्न्यादिप्रतियोगिकसमुच्चयविशेषितप्रजापतिविधिरित्यभ्युपगमे वाक्यान्तरवैयर्थ्याभावात्। सत्यपि वाक्यान्तरवैयर्थ्ये वार्त्रघ्नीवाक्ये युष्माभिः सामान्योद्देशानङ्गीकाराच्च, उभयतो व्यभिचारादप्रयोजकं सामान्योद्देशवाक्यवैयर्थ्यम्। तथाहि—वार्त्रघ्नीवाक्येन यथा कथञ्चित् पौर्णमास्यां वार्त्रघ्नीव्यवस्थापने तदनुरुद्धामावास्यायां विनैव वचनं "वृधन्वत्यौ व्यवतिष्ठेयाताम्" अनेकाव्यवस्थितावेकस्मिन् वचनाद्व्यवस्थिते अन्यव्यवस्थाया वचननिरपेक्षत्वात् "ऐरं कृत्वोद्गेयमि" त्यत्रैरापदस्यानियमेन यज्ञायज्ञीयस्तोत्रसाधनभूतान्तर्गते यत्किञ्चित्पदोद्वापकत्वे प्रसक्ते तत एवानियमेन तदीयगर्गत यत्किञ्चित्पदनिवृत्तौ च प्रसक्तायाम्, तत एव च यस्य पदस्य स्थाने इरापदं निविशते तत्पदसंस्कारकगीतेरपि यस्याः कस्याश्चिदनियमेनैरापदे प्रसक्तौ "न गिरा गिरेति ब्रूयादि"ति वाक्येन पदविशेषनिवृत्तिव्यवस्थितौ पदविशेषोद्वापकत्वव्यवस्था—गीतिविशेषव्यवस्थयोरपि विशेषयत्नं विनापि लाभदर्शनात्।

यदि तत्र "न गिरागिरेति ब्रूयादि"त्येतन्न वचनमनुवादमात्रमित्युच्यते, तर्ह्यनुवादमूलव्यवस्थयाप्यनेकव्यवस्थांगीकारे वचनमूलवार्त्रघ्नीव्यवस्थाया एकस्या "वृधन्वत्या व्यवस्था सुतरां सिध्येदि"ति वचनान्तरवैयर्थ्यमेव।

तथा "उच्चैः ऋचा क्रियते, उपांशु यजुषा, उच्चैस्साम्ने"त्यत्र यद्यपि ऋक्सामवाक्ययोर्ऋक्सामाविवक्षायामन्यतरवाक्यवैयर्थ्यम्, यद्यपि च त्रिष्वपि वाक्येषु ऋग्यजुस्सामाविवक्षायामुच्चैस्त्वोपांशुत्वयोर्विकल्पे त्रयाणामपि विधीनां वैयर्थ्यम्, तथापि "उपांशु यजुषे" त्यत्र यजष्ट्वमात्राविवक्षायां न कस्यापि वैयर्थ्यम्। उच्चैस्त्वविध्योरुपांशुत्वापवादार्थत्वसम्भवात्। तत्र युष्माकं विशिष्टोद्देशो न स्यात्,। तत्प्रयोजकवैयर्थ्याभावात्।

एवं "वारुणो यज्ञावचरः, वैकङ्कतो यज्ञावचरः, उत्तिष्ठन्नन्वाहाग्नीदग्नीन् विहरेति, व्रतं कृणुतेति, वाचं विसृजते, सूक्तवाकेन प्रस्तरं प्रहरति, आग्नेय्याग्नीध्रमुपतिष्ठते, युवं हि स्थः स्वर्पती" इति द्वयोर्यजमानयोः प्रतिपदं

कुर्यात्, । "एते असृग्रमिन्दवः" इति बहुभ्यो यजमानेभ्यः, दीर्घसोमे सन्तृद्ये धृत्यै, न प्रथमयज्ञे प्रवृञ्ज्यात्" इत्यादिषु विशिष्टोद्देशस्यानर्थक्याभावेऽपि बहुलमुपलम्भात् । अथ वाक्यानर्थक्यमित्युपलक्षणमानर्थक्यादिबाधकसामान्यस्य ।

एवञ्च "उपांशु यजुषे"त्यादौ "क्रियत" इति शब्दबोध्यविधीयमानमन्त्रोद्देशेनोपांशुत्वादिविधौ लौकिकवैदिकसाधारण्ये लौकिके फलं कल्प्यम् । वैदिके प्रधानफलेन फलवत्वान्नोपांशुत्वस्य फलं कल्पनीयमिति वैरूप्यं स्यादितिवत् तत्र तत्र यत्किञ्चिद्बाधकं सम्भाव्यत इति, उदाहृततदितरविशिष्टोद्देशेषु सामान्याकारेण उद्देशे न किञ्चिद्बाधकमिति चेत् । "यस्योभयं हविरार्तिमाच्छेति, यस्य सर्वाणि हवींषि नश्येयुः, दुष्येयुः, अपहरेयुर्वा, ऐन्द्रवायवाग्रं प्रथममहः, तरसमयास्सवनीयाः पुरोडाशाः, ग्रहं सम्मार्ष्टी"त्यादिषूभय सर्वादिशब्दानां वैफल्यं मा भूदिति विशिष्टस्योद्देशापत्तेः ।

अपि च सामान्याकारेणोद्देशे "इमामगृभ्णन्नि"त्यत्र प्रकृते इष्टकागर्दभरशनादिग्रहणसाधारण्यापत्त्या मन्त्रो न गर्दभरशनातो व्यावर्तेत । न च वस्तुतोऽश्वरशनाया आदान एव मन्त्रविधानाददोष इति वाच्यम् । "व्रीहीन् प्रोक्षती"त्यादावप्यनया रीत्या विशिष्टोद्देशपरिहाराय व्रीहिपदसमभिव्याहारमहिम्ना वस्तुतो व्रीहिनिष्ठापूर्वीयत्वस्यैव सामान्याकारेणोद्देशे नावघातादिर्यवादिसाधारणः सिध्येत् ।

किञ्च किमर्थं सामान्याकारेणोद्देशः क्रियते ? विशिष्टोद्देशकृतवाक्यभेदपरिहारायेति चेत् । तर्हि हविरार्तिविवक्षायामपि विशिष्टोद्देशाद्वाक्यं भिद्येत । आर्तिमात्रविवक्षायां निमित्तत्वं मा भूदिति । चेत् तन्मा भूत् । किं कुर्मः ? उद्देश्यस्य विशेषणे युष्माभिर्वाक्यभेदस्य दुर्वारत्वाभ्युपगमात् । यस्य शब्दांकुरितत्वप्रतिनिर्वाहायोद्देश्यविशेषणेऽपि न वाक्यभेद इति चेत् । तर्हि उभयशब्दसार्थक्याय तदर्थेनोद्देश्यविशेषणेऽपि वाक्यभेदो न स्यात् ।

किञ्च "ये पुरोदञ्चो दर्भास्तांन्दक्षिणाग्रांस्तृणीयात्, येन कर्मणेर्त्सेत् तत्र जयान्जुहुयात्, उत्त यत्सुन्वन्तिसामिधेनीस्तदन्वाहुः, यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यात्, यञ्जुह्वां गृह्णाति, प्रयाजेभ्यस्तत्, यदातिथ्यायां बर्हिस्तदुपसदामग्नीषोमीयस्य, यां कांचित्ब्राह्मणवतीमभिजानीयात्, तां मध्यमायां चितावुपदध्यात्, आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वाग्नीषोमीयो भवति, यदेवादः पौर्णमासं हविस्तद्र्हंनुनिर्वपेत्, यस्सत्रायागुरते, स विश्वजिता यजेत, यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्, स त्रेधा तण्डुलान् विभजेत्, यदधोऽवमृज्येत, यच्च स्य आश्लिष्यते, तद्दिक्षणव उरुक्रमायावद्यति"

इत्यादिषु सर्वनामशब्दैर्विशिष्टरूपेणैव प्रकृतपरामर्शिभिरुद्देश्यस्य विशिष्ट-रूपेणैवाभिधानादेतेषु स्थलेषु दुस्तरो वाक्यभेददोषः स्यात्।

न चात्र सर्वनामशब्दैर्लक्षणया सामान्यरूपेण प्रतिपादनं शक्यं कर्तुम्, सर्वनामलक्षणाया अक्लृप्तत्वात्। तथापि स्वेच्छया लक्षणामाश्रित्य वाक्यभेदा-भावसमर्थने एकत्वविशिष्टग्रहादौ ग्रहादिशब्दानां लक्षणाश्रयणापत्तौ ग्रहैकत्वादि-वह्वधिकरणोच्छेदस्स्यात्। अथैवमादिषु एकेन पदेनोद्देशमात्रात् विशिष्टो-द्देशोऽपि न वाक्यभेदस्तर्ह्यादानत्वाकारेणाश्वाभिधान्यादानमेकेनादानशब्देन वोध्यत इत्याश्रयणमनर्थकम्। तर्हि "आदत्त" इत्यनेनाश्वाभिधान्यादानं लक्ष्यते। एवं च लिंगात् गर्दभरशनायां प्रसक्तो मन्त्रस्ततः परिसंख्यातुमपि शक्यत इति चेत्। एवं सति ग्रहशब्देपि स्वेच्छाधीनलक्षणया विशिष्टोद्देशदोष-परिहारे ग्रहाधिकरणं दत्तजलाञ्जलिस्यात्।

अपि चैकेन शब्देनोद्देशेन वाक्यभेद इत्यपि आस्ताम्। ननु "यत् किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु प्रचरन्ती" त्यत्राग्नीषोमीयात्प्राचां पदार्थानां वहुत्वेऽपि तावतां पदार्थानां तेनेति पदेनोद्देशात् वाक्यभेदाभावो दृष्ट इति, वाक्यभेदाभावे एकपदेनोद्देशस्य प्रयोजकत्वं क्लृप्तमिति चेत्। हन्तैवं तत्राग्नीषोमीयादिति पंचम्यन्तं पदमेकं दृश्यत इति, तदपि तत्र प्रयोजकमिति कुतो न कल्प्यते। तत्र तदप्रयोजकमिति चेदेकपदेनोद्देशोऽपि वाक्यभेदाभावे अप्रयोजक एव।

ननु स तत्र प्रयोजक एव। तथाहि-संसर्गो हि वाक्यार्थः, स्तद्भेदादेव वाक्यं भिद्येत। यथा "यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा, आज्येनैता देवताः परिसंख्याय यजेतेति"। अत्र हविर्नाशदोषापहाराणां निमित्ततयोद्देश्यानां मिथो विशेषणविशेष्यभावे प्रमाणाभावेन प्रत्येकमेव विधेयान्वयस्य वक्तव्यतया, हविर्नाशे सत्याज्ययागं कुर्यात्, हविर्दोषे सत्याज्ययागं कुर्यात्, हविरपहारे सत्याज्ययागं कुर्यादित्यन्वयभेदाद्वाक्यत्रयम्।

न चात्र वाक्यभेदाभावायैव निमित्तानां परस्परविशेषणविशेष्यभाव-स्वीकारेणोद्देशस्यैक्यं सम्पाद्यताम्। तथा सति संसर्गस्यैक्यान्न भविष्यति वाक्यभेद इति वाच्यम्। नाशाख्यादर्शनदोषदुष्टे हविषि दुष्येयुश्शब्दबोध्या-मेध्यवस्तुसम्पर्कादेर्ज्ञानासम्भवेन वा शब्दाञ्जस्यानुरोधेन च स्वातन्त्र्य-स्यावश्यकत्वे परस्परविशेषणविशेष्यभावासम्भवात्। यत्र तु संसर्गैक्यम्, न तत्र वाक्यं भिद्यते। यथा-"यस्योभयं हविरार्तिमार्च्छेत्यैन्द्रं पंचशरावमोदनं निर्वपेत्" इति। अत्र आर्तिमात्रस्योद्देश्यत्वे हि न निमित्तत्वं यस्येति

शब्दाल्लब्धात्मकं सम्भवति । चिन्तितनिमिषितादिप्रतियोगिकस्यार्तिमात्रस्य सदातनत्वात्। कादाचित्कस्यैव निमित्तत्वात्। अतः कादाचित्कत्वायाऽऽर्ति-प्रतियोगिनि विशेषयितव्ये समभिव्याहृतहविःप्रतियोगिकैवार्तिनिमित्तमिति पर्यवस्यति । एवञ्चात्र हविरार्त्योरुद्देश्यकोटिनिविष्टत्वेऽपि विशेषणविशेष्य-भावापत्त्या संसर्गैक्यान्न वाक्यभेदः । तथा चैकेन सर्वनाम्नोपात्तानाम् अभिधायैकैक्योद्देश्यं भवतीति संसर्गैक्यान्न वाक्यभेद इति चेत्। मैवम्। "यदधो विमृज्यते, यच्च स्फ्य आश्लिष्यते, तद्विष्णव उरुक्रमायावद्यती" त्यादौ अधोऽवमर्जनस्फ्याश्लेषयोरेकेन तच्छब्देनोपादानादुभयोरेव निमित्तत्वं स्यात्। न प्रत्येकम्।

तथा "यो वृष्टिकामः, यो अन्नाद्यकामः, यस्स्वर्गकामः, स सौभरेण स्तुवीते"इत्यत्र वृष्टिकामादीनां "स" इत्येकेन पदेन ग्रहणात् समुदितस्यैव वृष्ट्यादेः सौभरफलत्वं स्यात्। न प्रत्येकम्।

एवं "यो भ्रूणहा, यो गुरुतल्पगामी, यो मद्यपायी, न तं भोजयेदि" त्युक्ते समुदितानामेवैषामभोज्यत्वं स्यात्। न प्रत्येकम्। तस्मात् "यदधोवमृज्यत" इत्यादौ एकपदेनोद्देशेऽपि वाक्यभेदाद्धविरार्तावेकपदेनोद्देशेऽपि वाक्य-भेदादुभयतो व्यभिचारादेकपदेनोद्देशो न वाक्यभेदे तन्त्रम् । एवञ्च सामान्याकारेणैकपदेनोद्देशस्य क्वाप्यसम्प्रतिपन्नत्वात्, प्रयोजनाभावादति-प्रसंजकत्वाच्च। प्रकृते "इमामगृभ्णन्निति" वाक्ये विशिष्टोद्देशः स्थित एव। तस्मिन् सत्यसति वा कर्तृनियमाय ग्रहणविधेर्नियमविधित्वे सम्भवति मन्त्र-विधानेन परिसंख्याविधित्वं न कथंचन सम्भवतीति दूषणं वज्रलेपायते।

ननु च विशिष्टोद्देशः सकलोऽयं व्याकुलीभूतः, कथमत्र वस्तुतत्वं बोध्यं मीमांसमानेन इति चेत्। यद्यप्यत्र शिथिलमिव भवद्दृश्यते येन तन्त्र-मित्याक्षेपोपक्रमरीत्या कृत्स्नमेव तन्त्रं व्याकुलीकृत्य पूर्वपक्षयितुं प्रवृत्तैर्दी-क्षितेन्द्रैर्नेदमिदानीमुपपादनीयम्, सिद्धान्तचतुरैः खलु तदुपपादनीयम्। अथापि यदि पृच्छसि, पृच्छसीति किंचिदुच्यते। संसर्गभेद एव वाक्यभेदः, संसर्ग-भेदश्च विधेयस्यैक्येऽप्युद्देश्यनानात्वे भवति। यथा-"यस्य सर्वाणि हवींषी" त्यादौ विशिष्टे तूद्देश्ये न भवति, यथा हविरार्तौ। तर्हि सर्वत्र विशिष्टमेवोद्दि-शामि, न भविष्यति वाक्यभेद इति चेत्। तदशक्यम्। एकत्वादेराकाङ्क्षाभावेन विशेषणत्वायोगात्, आकाङ्क्षायाः शब्दान्वयसहकारित्वात्। 'ग्रहं सम्मार्ष्टी' त्यत्र हि सक्तुवद्विनियोगभङ्गापत्त्या दृष्टार्थतालिप्सया च ग्रहकर्मकसम्मार्गे निश्चिते सोमावसेकनिर्हरणरूपप्रयोजनवशादेव सर्वग्रहसम्मार्गे च निश्चिते "भूयः कति गृहान् सम्मृज्यादि"त्याकाङ्क्षा न जायते।

क्वचिदयोग्यत्वादविशेषणम्—यथा हविर्नाशस्य हविर्दोषः। एतदुपपादितम्।

क्वचिदुत्तरवाक्यस्थाथशब्दानामानर्थक्यं स्यात्। यथा "ऐन्द्रवायवाग्रं प्रथमसहरि"त्यादौ। अत्र प्रथममित्यस्यैववोद्देश्यसमर्पकत्वे "अथ शुक्राग्रमथाग्रयणाग्रमि" त्यवकल्पितेन पुनरह्नोऽप्युद्देश्यकोटिप्रवेशे, क्वचित् श्रुतिसंकोचापत्त्या यथा 'तेषान्तरसमयाः सवनीया पुरोडाशाः' इति। अत्र सवनीयस्य पुरोडाशेन विशेषणे सवनीयश्रुतिसंकोचः। पुरोडाशस्य सवनीयेन विशेषणे पुरोडाशश्रुतिसङ्कोचः। तत्र समभिव्याहारादैकार्थ्ये च वाच्ये पुरोडाशपदस्यान्यत्र "पुरोडाशमलंकुर्वि"त्यत्र क्लृप्तलक्षणाकत्वादसन्निहितत्वाच्च, विकासकलक्षाणामङ्गीकृत्य प्रथमावगतसवनीयमन्त्रोद्देश्यत्वरक्षा क्रियते। तदेवं सवनीयस्य पुरोडाशेन विशेषणमिति।

यद्यप्यत्र सवनीयपदस्य यौगिकत्वात् रूढपुरोडाशपदावाधेन तदनुरोधाय सृष्टिवद्विकासकलक्षणा न्याय्या, तथाप्यक्लृप्ता सा, अत्रैव कल्पनीया। पुरोडाशपदस्य तु क्लृप्तेत्युक्तम्। अतः सवनीयपदमेव मुख्यार्थम्।

ननु श्रुतिसंकोचात् श्रुत्यावृत्तविकासस्वीकारे "यावज्जीवमग्निहोत्रमि"त्यादौ यावज्जीवश्रुत्यसंकोचाय "सायं जुहोति, प्रातर्जुहोती"ति वाक्ययोः सायंप्रातःपदे जीवनकालमात्रलक्षणाश्रीयेतेति चेत्। मैवम्। आवश्यकलौकिकवैदिककर्मान्तराणामवश्यानुष्ठेयतया यावज्जीवश्रुतेः स्वयमेव संकुचितप्रवृत्तित्वे कियति काले संकोच इति विशेषाकाङ्क्षायां सायंप्रातःपदाभ्यां संकोचयितव्यत्वेन तयोर्विकासकवृत्त्याश्रयणायोगात्। विकासे सायंप्रातर्वाक्ययोर्वैयर्थ्यापत्तेश्च प्रकृते "पुरोडाशा" इति पदमात्रवैयर्थ्यमिति द्रष्टव्यम्।

ननु तथापि "दीर्घसामे सन्तृद्ये धृत्या" इत्यत्र दीर्घशब्देन सोमसंकोचो न स्यादिति चेत्। न। एवं हि सर्वत्र सन्तर्दनापत्तौ "धृत्या" इत्यर्थवादो नावकल्पते। "अथो खल्वि" त्युपक्रमेण प्रकृतेरन्यत्र कश्चिद्विशेषं वक्ष्यति, इत्युपजनितबुद्धेः श्रुतिवृत्तदीर्घशब्देन सुखोपपाद्यायाः सोमशब्दसंकोचमात्रभीत्या प्रथमश्रुतदीर्घशब्दलक्षणाश्रयणपूर्वकं त्यागायोगाच्च। "वारणो यज्ञावचरः, वैकंकतो यज्ञावचरः" इत्यादाववचरशब्दवाच्यसाधनमात्रोद्देशेन वारणत्वादिविधाने वारणत्वादेर्लोके फलं कल्प्यम्। वैधे तु नेति वैरूप्यापत्तेः, वीक्षणादिसाधनेषु वारणत्वस्यायोग्यत्वाच्च यज्ञशब्देवचरशब्दार्थस्य सङ्कोचः। एवं सर्वत्राकाङ्क्षानुसारादापतन् सङ्कोच इष्यते, केवलस्तु न कर्तव्य इति दिक्। तस्मात् श्रुतिसंकोचायोगात् स निधनानामविशेषणम्।

क्वचिद्विलम्बकारणाभावादपि विशेषणम्। यथा "यस्योभयं हविः, यस्य सर्वाणि हवींषी"त्यादौ। अत्र निमित्तत्वप्रतीतिस्ताव'द्धविरार्तिमाच्छेंती' त्येतावता पर्यवसन्ना। उभयपदबलात्तु हविर्विशेषणमुखेन निमित्तस्य आकाङ्क्षेत्थाप्या। तत्तु न सम्भवति। यथैव हविश्शब्द "आर्च्छे"दित्यनेनाख्यातेन सम्बध्यते, तथोभयमपि दीर्घसोमादिवदसमस्तत्वात्।

ननु हविषानामार्त्तानामसमस्तनां परस्परसम्बन्धानामाख्यातेन संबन्धात्। तथा च युगपदाख्यातान्वये यस्योभयमात्रं, 'यस्य हविरार्तमि'ति निमित्तभेदाद्वाक्यं भिद्येत। अतोऽत्र 'उभय'मिति प्रथमं हविषा सम्बध्यते, विलम्बेन क्रिययेत्युभयविवक्षावादिना वक्तव्यम्। तत्र प्रमाणाभावः। एतेन सर्वत्वं व्याख्यातम्।

न चात्र वाक्यभेदभिया हविरार्तिर्न विवक्ष्यताम्। उभयार्तिरेव विवक्ष्यतामिति वाच्यम्। परिनिष्ठितस्य निमित्तत्वे सम्भवति, साकाङ्क्षस्य निमित्तत्वायोगात् 'प्रथममहरि'त्यत्राथशब्दानुपपत्त्या साकाङ्क्षस्याप्युद्देश्यत्वम्। सवनीयपदं तु नोभयशब्दवत् पदान्तराभावे मूकप्रायमिति विशेषः।

'युवं हि स्थः स्वर्पती' इति द्वयोर्यजमानयोः' प्रतिपदं कुर्यात्, एते असग्रमिन्दः' इतिं बहुभ्यो यजमानेभ्यः' इत्यादौ द्वित्वबहुत्वाभ्यां अविशेषणे सर्वत्र प्रतिपद्विकल्पापत्तिः। इष्टापत्तौ तावन्मात्रविवक्षायां 'वाकारमात्रं श्रोष्यते'त्यादिबाधकं द्रष्टव्यमिति।

तस्माद्यत्राकाङ्क्षादिकमस्ति, तत्र विशिष्टस्योद्देशाद्वाक्यभेदः। तादृशी चाकाङ्क्षाऽन्वयबोधकारणीभूतैव ग्राह्या। तेनान्वयबोधाप्रयोजिकायां तस्यां सत्यामपि श्रुतमपि विशेषणपदं न विशेष्यं न विशिनष्टि। यथा—"यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा, पुनराधेयन्तस्य प्रायश्चित्तिरि"ति। अत्र यस्य अग्नी अनुगतावित्येतावतैव हविरार्तिस्थल इव निमित्तबुद्धिपर्यवसनात् "उभौ" इति विशेषणाकाङ्क्षा शाब्दबोधे न प्रयोजिका। विधेयस्य पुनराधानस्य तु उभयाग्न्युत्पादकत्वसामर्थ्यवशात् निमित्ताग्न्यनुगमप्रतियोगिन्युभयत्वमावश्यकमित्यस्त्यैव तत्राकाङ्क्षा। तया शाब्दबोधानन्तरं मानसबोधे कामं निमित्तकोटौ उभयत्वं विशेषणमस्तु।

एवं स्वर्गादिकाममुद्दिश्य विधीयमाने कर्मणि सामर्थ्यमुद्देश्यविशेषणमिति मनसा परिच्छिद्यत इति द्रष्टव्यम्।

एवं "यावज्जीवमग्निहोत्रमि"त्यादौ पूर्वोक्तरीत्याऽऽकाङ्क्षासत्वात्। "सायं जुहोती"ति वाक्योपनीतसायमादिना जीवनं विशेषितं मनसैव ज्ञायते।

एतेन "अष्टवर्षं ब्राह्मणमुपनयीत, प्राचीनप्रवणे वैश्वदेवेन यजेत, अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती"त्यादिषु ब्राह्मण-प्रवणामावास्याना-मनुपादेयतया प्रसिद्धानां ग्रहादिवच्छ्रूयमाणविशेषणविरुद्धविशेषणान्तरवत्तया प्रागनिश्चितत्वादष्टवर्षादिभिर्विशेषणमविरुद्धमिति सिध्यति।

न च सवनीयवत् श्रुतिसंकोचभयादविशेषणमत्रेति वाच्यम्। दृष्टान्त-वैषम्यात्। सवनीयहविषां हि प्रकृतापूर्वार्थानां तदर्थमेवोपात्तानां पुनरन्येनानु-पादापनीयतयोपादानकालसुलभा तद्गतविशेषापेक्षा न भूयो जायत इत्याकाङ्क्षाविरहात् श्रुतिसङ्कोचो न युक्तः। ब्राह्मणादीनां तु प्रकृता-पूर्वार्थत्वाभावात्, एभिरेव वाक्यैः प्रतीक्ष्यतयोपादेयत्वे कीदृशा ब्राह्मणादयः प्रतीक्ष्या इत्याकांक्षासम्भवेन विशेषणैः श्रुतिसंकोचो युक्त इत्यवहितैः द्रष्टव्यम्।

यत्तूद्दिश्यमानं कालदेशादिभिन्नत्वात्स्वरूपेणोपादेयम्, वाक्यान्तरेण च ग्रहादिवदनुष्ठापितम्, तस्य तूद्देश्यस्य विशेषणाकाङ्क्षित्वस्वाभाव्यात्तत्रत्य-विशेषणैः श्रुतिसंकोचो न्याय्य एव। यथा "तप्ते पयसि दध्यानयती"ति। अत्र वाक्यप्रवृत्तिवेलायामपूर्वार्थत्वाभावाद्वैश्वदेवयागेन नानुष्ठापितमित्यस्ति-विशेषणाकाङ्क्षा। पयस उपादेयत्वं तु वास्तवं स्फुटमेव, तदनेन प्रसंगेनात्र बहु-वक्तव्यमस्ति, ग्रन्थगौरवभयात्, वार्तिकन्यायसुधयोः श्रमवद्भिरुन्नेतुं शक्यत्वाच्च उपरम्यते—इति। एवं च प्रकृते ग्रहणस्य मन्त्रलिङ्गेनाश्वबन्धनान्वयानुपपत्त्या चाक्षिप्तस्य ग्रहसवनीयादिपदाकांक्षाविरहेण "अश्वाभिधानीमि"त्यनेन विशेषण-मशक्यमिति न मन्त्रविधिः। किन्तु ग्रहणविधिरेवेति स्थितम्।

अथ मन्त्रविशिष्टग्रहणविधिरस्तु। न च स एव दोषः। "त्र्यङ्गैः स्विष्ट-कृतं यजती"त्यत्र विशिष्टविध्यङ्गीकारात्। ननु त्र्यङ्गसमासेऽङ्गोद्देशेन त्रित्व-विधावेकप्रसरता भज्येतेति। विशिष्टविधिरस्तु। प्रकृते किमायातीति चेत्। एक-प्रसरताभङ्गस्य तत्र मूलयुक्तित्वाभावात्। "लोहितोष्णीषा ऋत्विजः प्रचरन्ती"-त्यत्र समासेऽपि विध्यन्तरप्राप्तोष्णीषानुवादेन लौहित्यविधिदर्शनेन, तद्वत्प्र-कृतेऽपि त्रित्वविधिप्रसङ्गात्।

'जायमानो वै ब्राह्मणस्त्रिभिऋणवाजायते' इत्युपक्रम्याम्नातस्य दोः पूर्वा-र्धस्य, गुदं मध्यतः, ततः श्रोणी जघनार्धस्ये'त्यादिवाक्यशेषस्य बाधो मा भूदित्येव विशिष्टविध्यङ्गीकारात्। तद्वदेव प्रकृतेऽपि 'इमामगृभ्णन्नि'ति मन्त्रप्रतीकोपा-दानस्य वैयर्थ्यं मा भूदिति विशिष्टविध्यङ्गीकारस्य न्याय्यत्वादिति चेत्। उच्यते। 'त्र्यङ्गैरि'त्यत्र प्रधानयागशेषाङ्गानुवादेन त्रित्वविधावनिज्याशेषाङ्गान्तराम्नान-

स्यार्थवादविधयाप्यन्वयायोगादस्तु विशिष्टविधिः । न प्रकृतेऽपि । इह मन्त्रग्रहणस्यार्थवादविधयान्वयसम्भवात् । किं च तत्र विशिष्टविधिः, यत्र विशिष्टघटकानां विधेयत्वमस्ति । यथा—'त्र्यङ्गैरि'त्यत्र । तत्रानिज्याशेषाङ्गानां त्रित्वस्य च विशिष्टविध्युन्नीतविध्यन्तरेण विधिसम्भवात् ।

यत्र तु विशिष्टघटकैकदेशस्यान्यतः प्राप्तिः सम्भवति, न तत्र विशिष्टविधिः । यथा—'दध्नेन्द्रियकामस्य जुहुया'दित्यादौ । अत्र दध्युपरागार्थं होमस्योपादानेऽपि प्राप्तत्वान्न विधानम् । अतोऽत्र विशिष्टोपादानेऽपि न विशिष्टविधिः । एतेन लोहितोष्णीषादिवाक्यमपि व्याख्यातम् । अत्रैकप्रसरताभङ्गभिया विशिष्टस्योपादानेऽपि न विधिः । तदिहादानस्यार्थाक्षिप्तत्वान्न विधेययत्वमिति, न तद्घटितविशिष्टविधिः ।

न च कर्तृनियमार्थं पुनर्विधिसम्भवाद्विशिष्टविधिरिति वाच्यम् । प्रत्यक्षविधिनैव लभ्यस्य कर्तृनियमस्य विशिष्टविध्युन्नीतविधिनाऽऽध्वर्यवाद्समाख्याशून्येन लब्धुमशक्यत्वाद्विशिष्टकर्तृविधानेनैव विशेषणकर्तृनियमलाभेन तदर्थमप्यादानस्याविधेयत्वात् । धात्वर्थस्यादानस्य दध्यादिवद्विधाने उपरागसापेक्षत्वाभावेन, लोहितोष्णीषादिवदेकप्रसरताभङ्गभयाभावेन च, तद्वन्न विशिष्टोपादानमप्यस्तीति ध्येयम् । अपि च 'एकादश प्रयाजान् यजता'त्यादिवत् अनूद्य विधिरेवात्र न्याय्यः, अन्यथा तत्रापि विशिष्टविध्यापत्तेः । तत्रापि विशिष्टविध्युन्नीतप्रयाजविधिना गृहमेधीयाज्यभागन्यायेनाङ्गान्तरपरिसङ्ख्यापत्तेः ।

ननु प्रकृते मन्त्रग्रहणमनर्थकं सद्विशिष्टविधिमुत्थापयति । तत्र प्रयाजग्रहणं तूद्देश्यसमर्पणेन फलवदिति चेत् । न । मन्त्रग्रहणस्यापि स्तावकतयार्थवत्त्वात् ।

अथ स्तावकत्वापेक्षया विध्यनुप्रवेशोऽभ्यर्हित इति विधिकल्पनामिति चेत् । तत्रापि उद्देश्यसमर्पकत्वापेक्षया विधिकोटिप्रवेशस्याभ्यर्हिततया तदर्थं विशिष्टविधिकल्पनापत्तेः ।

अथ तत्र विशिष्टविधिरित्येव स त्यज्यते । तर्हि प्रकृतेऽपि तथैव त्याज्यः । किं चैवं "ब्रह्मसाम्न्यालभत" इत्यत्र "तान् पर्यग्निकृतानुत्सृजती"ति वाक्यस्य वैयर्थ्यं मा भूदिति विशिष्टविधिस्वीकारापत्तेः । गौरवमात्रस्य युष्माभिर्विशिष्टपरिपन्थित्वानभ्युपगमात् ।

न च तत्रानेकादृष्टवाक्यभेददोषपरिहारायैव विशिष्टविधित्यागः, न गौरवादिति वाच्यम् । तथा सति "यदि सत्राय दीक्षितानां साम्युत्तिष्ठासेत् सोममपभज्य, विश्वजिता यजेते"ति षष्ठाधिकरणविरोधप्रसंगः । अनेकादृष्टवाक्य-

भेददोषाभावेन सोमापभागविशिष्टविश्वजिद्विध्यभ्युपगमसंभवात्। यदि तत्र सोमविभागस्य रागप्राप्तत्वेन विध्यसम्भवान्न तद्विशिष्टविधिः। तर्हि मन्त्रस्यापि लिङ्गादेव प्राप्तत्वात् "इमामगृभ्णन्नि"त्यत्रापि न विशिष्टविधिरिति तुल्यम्।

तस्मात् "यदि सत्रायें"त्यत्र सोमशब्दस्य स्वकीयद्रव्यमात्रोपलक्षकत्वमंगीकृत्य रागप्राप्तद्रव्यविभागानुवादकत्वेन "सोममपभज्ये"त्यवशं स्वीकृत्य, विशिष्टविधिभयादेव विश्वजिन्मात्रविधिस्वीकारात्।

"ब्रह्मसाम्या लभते" इत्यत्र विशिष्टविधिगौरवभयादेवालम्भोत्कर्षविधिरिति द्रष्टव्यम्।

अपि च "इमामगृभ्णन्नि"त्यत्र मन्त्रग्रहणस्य परिसंख्यार्थत्वेन साफल्यसम्भवेन केवलानुवादत्वं न्याय्यमिति यदि। तदा "यदि सत्राये" त्यत्रापि साम्युत्तिष्ठासुर्यदिस्वद्रव्यं विभजेत् सोममेव, न द्रव्यान्तरमिति परिसंख्यार्थत्वेन साफल्याय, सोमपदे उपलक्षकत्वाश्रयणक्लेशाभावाय च सोमविभागविशिष्टविश्वजिद्विधिप्रसङ्गः।

यत्तु गौरवमात्रस्य विशिष्टविधिपरिपन्थित्वे "ज्योतिष्टोमेन स्वर्गकामो यजेते"ति वाक्येन करणतयावगतस्य यागस्यार्थाक्षिप्तं साध्यत्वमनूद्य, सोममात्रविधिसम्भवे "सोमेन यजेते"त्यत्र मत्वर्थलक्षणापूर्वकं सोमविशिष्टयागविधिर्न स्यात्, गौरवादेवेत्युक्तम्। तदयुक्तम्। सोमवाक्ये विशिष्टविध्यनङ्गीकारे अधिकारवाक्ये यागविशिष्टफलविध्यापत्तिः। तस्मादवश्यं भाविनि विशिष्टविधिगौरवे लाघवात् सोमवाक्य एव विशिष्टविधिराश्रितः। तथाहि—सति सोमवाक्ये न फलासंयुक्ततयोत्पन्ने यागेऽधिकारवाक्यावगतप्रत्यवायपरिहारस्य चैकस्मिन्नेव सम्बन्धो लभ्यते। अन्यथाऽधिकारवाक्ये विशिष्टविध्यभ्युपगमे तद्वाक्यविधेययागस्योत्पत्तिशिष्टस्वर्गावरुद्धतया वसन्तवाक्यवल्लभ्यप्रत्यवायपरिहारसम्बन्धायोगेन, वसन्तवाक्येऽपि प्रत्यवायपरिहारफलककर्मान्तरविध्यापत्त्या गौरवप्रसङ्गात्। तस्मात् विशिष्टविध्ययोगात् ग्रहणमात्रविधिरिति "इमामगृभ्णन्रशनामि"ति वाक्यं न परिसंख्योदाहरणमिति।

इति श्रीमन्नल्लबोम्मकुलार्णवपूर्णचन्द्रचिन्नमाम्बागर्भशुक्तिमुक्ताफल-
ब्रह्मण्यविरुदाङ्कितचोक्कनाथभूपालहृदयकुहरविहरमाण-
साम्बशिवप्रेरितेन चिन्नप्पय्यदीक्षितेन विरचितायां
दुरूहशिक्षायामुदाहरणोद्धारभङ्गः।

## अथ त्रैदोष्य-तदभावव्यवस्थाभङ्गनामा द्वितीयस्तरङ्गः ।

अथ प्राप्ताप्राप्तपरिसंख्ययोस्त्रैदोष्य-तदभावव्यवस्था दीक्षितेन्द्रैराक्षिप्ता । तत्र सिद्धान्तिना सता प्राप्तपरिसंख्यायास्त्रैदोष्यं न स्थापितम् । अप्राप्तपरिसंख्यायां तु तदभावभङ्गः प्रत्युद्धृतः । एवं हि तत्—"इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यत्र मन्त्रस्याश्वरशनासम्बन्धेन नैराकांक्ष्यान्न गर्दभरशनया लिङ्गात्सम्बन्धः, येन तद्बाधनार्थं प्रकृतविधिना स्वार्थं हित्वा "गर्दभरशनां नादत्ते" इत्यर्थः स्वीकार्यः । लिङ्गप्राप्तो गर्दभसम्बन्धश्च बाध्य इति त्रैदोष्यं स्यात् ।

न च तथापि "आग्नेय्याग्नीध्रमुपतिष्ठते" इत्यधिकरणरीत्या क्वचिद्विनियोगेन निराकांक्षस्यापि मन्त्रस्य मन्त्रापेक्षिगर्दभरशनोत्थापिताकांक्षस्य गर्दभरशनासम्बन्धः स्यादिति वाच्यम् । गर्दभरशनाया मन्त्राकांक्षायां मानाभावात् । आग्नीध्रोपस्थानस्य तु "आग्नेय्ये"ति विधिबलान्मन्त्राकांक्षायां प्रकृतमन्त्रग्रहणम् ।

न चानियतोपायग्रहणात् प्रकृतमन्त्रग्रहणं ज्याय इति वाच्यम् । "ऐन्द्रया गार्हपत्यमुपतिष्ठत" इति विनियुक्ताया अप्यैन्द्या इन्द्राकांक्षानुरोधेन सम्बन्धापत्तेः—इति । तन्न । गर्दभरशनाया उपद्रष्टृवचनाद्यनियतोपायप्राप्तौ तस्योपायस्य रशनाशेषत्वमग्निशेषत्वमित्युभयं कल्प्यम् । प्रकृतमन्त्रग्रहणे तु तस्य रशनाशेषत्वमात्रं कल्प्यमिति लाघवादाग्नेयीन्यायेनैव विनियुक्तस्यापि प्रकृतमन्त्रस्यैव ग्रहणौचित्यात् । ननु तत्रैवाग्नेयीन्यायः, यत्र मन्त्राकांक्षा स्थिता । मन्त्रविशेषे विनिगमकमात्रमपेक्षितम्, लाघवस्य विनिगमकप्रमाणत्वादिति चेत् । विनिगमकस्यैव लाघवस्य यत्रोपायानियमस्तत्रापि विनिगमनाय प्रवृत्तिसंभवात् । विनिगमकस्य सम्भवेऽप्यन्यत्र विनियुक्तो निराकांक्ष इति मन्त्रानपादाने दार्शपूर्णमासिकेतिकर्तव्यताया विकृतिष्वप्रवृत्तिप्रसंगात् ।

न चैवमैन्द्या इन्द्रोपस्थाने प्रवृत्तौ श्रुतिलिङ्गाधिकरणविरोधः, । तदप्रवृत्तावाग्नेय्यधिकरणविरोधात् ।

ननु यत्र मन्त्राकांक्षा स्थिता, तत्रैव तदधिकरणन्यायप्रवृत्तिरित्युक्तमिति चेत् । न । मन्त्रविनियोगविनिगमनवदुपायमात्रविनिगमनस्य कर्तुं शक्यत्वे आग्नेयीन्यायसंकोचस्यायुक्तत्वात् "विरुद्धं सकलमिव भवद्येन दृश्येत तन्त्रमि"त्ति दृष्ट्या प्रवर्तमानं पूर्वपक्षिणं प्रति सिद्धान्तिना अधिकरणविरोध-

मात्रस्यानुद्घाटनीयत्वात्। अथापि विरोधः परिहरणीयः। एवं परिहरणीयः— यद्यग्निप्रकरणे इन्द्रोपस्थानं विहितमस्ति। न चात्र मन्त्रः, तदा "कदाचन स्तरीरसि नेन्द्र सश्चसी"ति तत्प्रकाशनसमर्थमन्यत्र विनियुक्तमपि मन्त्रं भाष्योक्तरीत्या प्राकरणिकमाग्नेयीन्यायेन गृह्णीयादेवेन्द्रोपस्थानम्। प्रकरणे तु नास्तीन्द्रोपस्थानं विहितम्। अन्यथा इन्द्रोपस्थानविधिसत्त्वे "वचनात्त्वयथार्थ-मि"त्यधिकरणे "ऐन्द्र्या गार्हपत्यमि"त्यत्र गार्हपत्यप्रकृत्या इन्द्रं लक्षयित्वा इन्द्रोपस्थानमैन्द्रीकरणकं विधीयत इति पूर्वपक्षो निरालम्बनः स्यात्, विहितस्य विधानासम्भवात्।

एवं चास्यैव मन्त्रस्य प्रकरणपाठरक्षार्थं दीक्षाहुतिमन्त्रन्यायेनेन्द्रो-पस्थानविध्युन्नयनपूर्वकमिन्द्रोपस्थाने लिङ्गाद्विनियोगो वक्तव्यः। तथा च श्रुत्या मन्त्रे निराकांक्षीकृते, प्रकरणे च कृतार्थे न लिङ्गोपस्थानमाक्षेप्यम्, न तरां तत्र मन्त्र इति, श्रुत्या लिङ्गबाध इति। न चैवं विनियुक्तस्याप्यन्याकांक्षया विनियोगे वार्त्रघ्न्यादिमन्त्रस्यापि विद्धद्वाक्ययोर्विधायकत्वपक्षे देवतापेक्षिणोस्तत्कर्मणोस्त-दुपायत्वेन मन्त्राकांक्षिणोर्विनियोगस्स्यादिति वाच्यम्। एवं हि मन्त्रान्तरस्यापि प्राप्तौ बहूनां मन्त्राणां देवतानां च तयोः कर्मणोर्विकल्पस्यापूर्वकर्मविधिप्रयुक्त-प्रकृतकल्पनापूर्वान्तरकल्पनादेश्च दोषस्य परिहाराय विद्धद्वाक्ययोः समुदाय-सम्पादकत्वेन फलवतोरनुवादकत्वस्यैव न्याय्यत्वेन कर्मान्तरविधायकत्वस्यैव त्यागे आकांक्षाया अभावेन तन्मूलस्य मन्त्रविनियोगस्याप्रसंगात्।

अथ "यदातिथ्यायां बर्हिः, तदुपसदामग्नीषोमीयस्य चे"त्यत्र यदातिथ्यार्थं बर्हिरुपादत्ते, तन्न केवलं तदर्थमेव, किन्तूपसदाद्यर्थमपीति बर्हिःसाधारण्य-सिद्धान्तो भज्येत। तत्राप्येवं प्रयुक्तिलाघवायातिथ्याप्रयुक्तस्यैव बर्हिष उपसदा-द्यन्वयसम्भवादिति चेत्। उच्यते। प्रयुक्तिलाघवाय विनियुक्तविनियोगे शिष्टाचारविरोधात्, उपसदादिषु चोदकप्राप्तलवनादिबाधप्रसंगाच्च।

न चैवमाग्नेय्या अपि स्तुतिषु विनियुक्ताया आग्नीध्रोपस्थाने विनियोगो न स्यात् इति वाच्यम्। तत्र शिष्टविगानाभावात्।

"मन्त्राः कृष्णाजिनं दर्भा ब्राह्मणा हविरग्नयः।
अयातयामान्येतानि नियोज्यानि पुनः पुनः॥" इति

मन्त्रादिषु विनियुक्तविनियोगदोषाभावात्। अथैवं बर्हिषामपि दर्भत्वाद्विनियुक्तविनियोगसम्भव इति चेत्। न। 'दर्भाः' इति सामान्यतो ग्रहणेऽपि पितृकर्मण्यास्तरणादिषु विनियुक्तेषु मन्त्रपूर्वमाहृत्य विनियुज्य प्रतिपादयेदिति विनियुक्तेषु च दर्भेषु पुनर्विनियोगे शिष्टविगानदर्शनेन तद्भिन्नपरिस्तरणादि-

दर्भमात्रविषयत्वात्पुनर्विनियोगाभ्यनुज्ञानस्य नातिथ्याबर्हिषोऽग्नीषोमीयादिषु विधिसम्भवः।

किं चात्र प्रयुक्तिलाघवं न गुणाय। आतिथ्याप्रयुक्तस्यैव बर्हिष उपसदाद्यन्वये चोदकप्राप्तिस्वस्वबर्हिर्ग्रहणलवनादिबाधप्रसङ्गात्। आग्नेय्यादिषु तूभयान्वयेऽपि कस्यचित् न बाध इति, तादृशस्थल एव लाघवानुसरणं गुणायेति द्रष्टव्यम्।

यत्तु—अस्तु वा गर्दभरशनाग्रहणे तत्तत्पुरुषबुध्याक्षिप्तध्यानाद्यनियतोपायग्रहणे गौरवात् लाघवानुसारेण नियतस्मारकापेक्षा, तथापि न मन्त्रान्वयः सिध्यति। स्मारकत्वेन हि मन्त्र आकांक्षाविषयः,। न मन्त्रत्वेन। तथा च नियतोपायान्तरस्य स्मारकत्वेनान्वयेऽपि गौरवपरिहारात्, न विनियुक्तमन्त्रान्वयकल्पना युक्ता—इति। तदयुक्तम्। अप्रकृतध्यानाद्युपायान्तराणां बहुत्वेन मिथो विनिगमनाविरहेण चानुष्ठानकालेऽव्यवस्थितस्वेच्छामात्रमूलव्यवस्थाकविकल्पापत्तेः, स्मारकत्वरूपधर्मैक्यमात्रस्यानुष्ठानकालीनविकल्पेऽकिञ्चित्करत्वात्, प्रकरणीभूताग्निसम्बन्धस्यापि कल्पनीयतया विपरीतगौरवाच्च। प्रकृतमन्त्रग्रहणे तु नाग्निसम्बन्धकल्पनागौरवम्, क्लृप्तत्वात्, अत एव न विकल्पापत्तिरिति, मन्त्रः गर्दभरशनायां प्राप्नुयादेवेति तद्व्यावृत्त्यर्थं "इमामगृभ्णन्नि"ति विधौ स्वार्थत्यागादिकमावश्यकमेवेत्यप्राप्तपरिसंख्यायामपि त्रैदोष्यं वज्रलेपायत एव।

इति श्रीमल्लबोम्मकुलार्णवपूर्णचन्द्रचिन्नमाम्बागर्भशुक्तिमुक्ताफलब्रह्मण्यविरुदाङ्कितचोक्कनाथभूपालप्रियसचिव चिन्नबोम्मभूपालहृदयकुहरविहरमाणसाम्बशिवप्रेरितेनाप्पय्यदीक्षितेन विरचितायां दुरूहशिक्षायां प्राप्ताप्राप्तपरिसंख्ययोः त्रैदोष्यतदभावव्यवस्थाभङ्गोनामा द्वितीयस्तरङ्गः।



## अथापूर्वसाधनत्वाक्षेपोद्धारभङ्गनामा तृतीयस्तरङ्गः ।

"यद्व्रीहिप्रोक्षणादे"रिति श्लोकेन "व्रीहीन् प्रोक्षति" "व्रीहीनवहन्ती"त्यादिविधिवाक्ये व्रीह्यादिपदेष्वपूर्वीयत्वलक्षणाया अभावेन प्रोक्षणादेः श्रुतव्रीह्याद्यर्थत्वमेव, न यवसाधारण्यमित्याक्षिप्तम् । तद्दूषयितुं द्रव्यसंख्याधिकरणं प्रथमं लिखितं नव्यैः, "व्रीहीन् प्रोक्षती"त्यादौ श्रुतं प्रोक्षणादि नीवारादावूहितव्यम्, न वा तदर्थं तस्यातिदेशोऽस्ति । न वा । एतदर्थमपि प्रोक्षणं व्रीहिस्वरूपप्रयुक्तम्, उतापूर्वसाधनस्वरूपप्रयुक्तमिति संशये, व्रीहिश्रुत्या व्रीह्यर्थमिति पूर्वः पक्षः । तथात्वे प्रोक्षणमनर्थकं स्यात् । तेन विना व्रीहीणां सिद्धत्वात् । व्रीहिशब्दस्य लौकिकव्रीहिमात्रार्थत्वे सक्तुवदर्थकर्मत्वापत्त्या द्वितीयाश्रुतिभङ्गः । लौकिक-वैदिकव्रीहिसाधारण्ये तु प्रोक्षणस्य लौकिकविषयत्वे उक्तरीत्याऽर्थकर्मत्वस्य, वैदिकविषयत्वे व्रीहिसंस्कारतया गुणकर्मत्वस्य चापत्त्या विधिवैरूप्यापत्तिः । तन्मा भूदिति व्रीहिपदमपूर्वसाधनरूपपरमिति सिद्धान्तः इति, अत्र फलफलिभावः संशयानां दर्शितः । व्रीहिस्वरूपार्थत्वे प्रोक्षणादेः प्रधानार्थत्वाभावादतिदेशाभावेन नास्त्यूहः-इति ।

तत्र प्रष्टव्यम्-प्रधानार्थत्वाभावेऽपि सौर्यादिषु व्रीहिसत्त्वात्तदर्थं प्रोक्षणं तत्र स्यादेव । अभिक्रमणमिव प्रयाजे नीवारादिद्रव्यकेषु नीवाराणां व्रीहिस्थानापत्त्या व्रीह्यर्थानेव सतो धर्मान् प्राप्नुयात् । नीवारादिराकांक्षावशादेवाग्नेयार्थानेव धर्मान् सौर्यादिरिवेति कथमपूर्वपक्षे नास्त्यूहः ? इति ।

ननु व्रीहिकार्यापन्नोऽपि नीवारादिः व्रीहिकार्यार्थानेव गृह्णीयान्न व्रीहिस्वरूपार्थानिति चेत् । अप्रोजकत्वात् । यथा सौर्यापूर्वमितिकर्तव्यतापेक्षमाग्नेयापूर्वार्थं गृह्णाति, तद्वन्नीवारादेः स्वजातीयार्थधर्मग्राहित्वसम्भवात् । अयमेव स्थानापत्त्या धर्मातिदेशपदार्थः । अन्यथा सिद्धान्तरीत्याऽपूर्वीयलक्षणाया कार्यार्थत्वे व्रीहिकार्यस्य नीवारैः साध्यमानत्वे तदर्थप्रोक्षणस्य "प्रधानं नीयमानं ही"ति रीत्योपदेशत एव प्रवृत्तिसम्भवेन तदर्थमतिदेश एव व्यर्थः स्यात्, अनुष्ठाने विशेषाभावादिति ।

तथेदमपरं प्रष्टव्यम् । उहो नाम कारकान्तरसम्बन्धनिमित्तोऽन्यथाभाव इत्युक्तम् । कथमेतत् ? काम्यगोदोहनादिकारकसम्बन्धेनान्यथाभावात्प्रकृतावेव

प्रणयनस्योहप्रसङ्गात्, कर्मकारकान्यकारकसम्बन्धे क्रियान्यथाभाव एव नास्ति। फलापवर्गित्वात् क्रियाया इति चेत्। मैवम्। क्रियासु कर्मकारकसम्भवेऽपि मन्त्रपदेषु "अग्नये" इत्यादिषु कर्माभावादूहो न स्यात्।

अथ "अग्निना प्रकाशयेदि"ति वाक्येऽग्निपदस्य प्रकाशद्वारा कर्मीभूताग्निसम्बन्धोऽस्तीति चेत्। न। तादृशवाक्यस्याश्रुतत्वेन तन्मूलकर्मसम्बन्धस्याप्रयोजकत्वात्। अन्यथा "प्रयाजैः सौर्यापूर्वस्योपकुर्यादि"ति वाक्यात् प्रयाजानामूहप्रसङ्गात् साम्नां कर्मकारकाभावादनूहः स्यात्। तत्र कारकान्तरशब्देन व्यङ्ग्यान्तरं विवक्षितमिति चेत्। ऊहत्वस्याननुगमेनाध्यायभेदापत्तेः। एकारादिव्यञ्जकस्थायोभावादेः स्थानान्तरगतैकारादिव्यञ्जनेऽपि व्यङ्ग्यभेदाभावादनूहप्रसङ्गात्। अपूर्वसाधनलक्षणायां नीवारस्थलेऽप्यपूर्वसाधनरूपकर्मकारकाभेदेन प्रोक्षणादेरनूहप्रसङ्गाच्च।

न चापूर्वसाधनत्वेनैक्येऽपि व्रीहित्वावच्छिन्नान्नीवाराणां भेदादस्त्यूहः इति वाच्यम्। एवं यवानामपि व्रीहिभिन्नत्वात्प्रकृतावेवोहः स्यात्। प्रतिप्रयोगं व्यक्तिभेदाद्व्रीहिष्वेवोहप्रसङ्गाच्चेति। तस्मादपूर्वीयलक्षणासिषाधयिषितो नायमूहातिदेशस्वरूपनिष्कर्षः समञ्जस इति।

यत्तूक्तं "व्रीहीनवहन्ती"त्यादौ न लक्षणा युक्ता, श्रुतौ बाधकभावात्। न चानर्थक्यम्। अवहननस्य "व्रीहीनवहन्ती"ति लौकिकवाक्यवदन्यथोपपत्तेः इत्यत्रावघातनियमानर्थक्यं स्यादिति। तन्न। मूल एव "यदर्था व्रीहयस्तदपूर्व एवोपयोगस्य" दर्शितत्वात्।

"प्राङ्मुखोऽन्नानि भुञ्जीते"त्यादिदिङ्नियमस्यापूर्वमपि कल्पयित्वा, तत्रोपयोगाङ्गीकारे श्रुत्यबाधाय क्लृप्तव्रीहिसाध्यापूर्वार्थत्वात्। अन्यथापूर्वमात्रोच्छेदात्। ज्योतिष्टोमादावपि तदुचितार्थलक्षणादिसम्भवात्।

यदपि "किञ्चे" त्यादिनोक्तं प्रथमं संस्कारवाक्याद्व्रीहिसंस्कारकतयाऽवघातान्वयबोध एव न सम्भवति। विधिवैरूप्य-विध्यानर्थक्ययोरपरिहार्यत्वादिति। तत्रानार्थक्यं लौकिकवाक्यदृष्टान्तेन परिहृतमेव। वैरूप्यमपि वैधव्रीहिमात्रविषयत्वाभ्युपगमात्परिहृतमेव।

किञ्च "तप्ते पयसि दध्यानयति, यस्योभावग्नी अनुगतावि"ति वाक्यद्वयावष्टम्भेन प्रथमं व्रीहिष्वेव संस्कारान्वयः। पश्चाद्व्रीहीणामपूर्वीयत्वविशेषलाभ इत्यस्य मूल एव निपुणतरमुपपादितत्वात्तदुपरि कथमियं शंका हृदयमारूढेति विद्वद्भिः विचारणीयम्।

ननु लक्षणाभावेऽपि व्रीह्यादौ प्रोक्षणादिधर्मग्राहकं रूपमपूर्वीयत्वं यवसाधारणमेवेति प्रोक्षणादेर्यवसाधारण्यमवर्जनीयमेवेति चेत्। मैवम्। व्रीह्यादिपदमहिम्ना तद्गतापूर्वीयत्वस्यैव धर्मग्रहप्रयोजकत्वात्।

न चैवं नीवारादौ निर्वपतेरनुवादत्वं न स्यादिति वाच्यम्। व्रीहिस्वरूपार्थत्वेऽप्याकाङ्क्षावलान्नीवारेषु व्रीहिसंस्कारातिदेशस्य दर्शितत्वेन व्रीह्यादिगतापूर्वीयत्वार्थत्वे प्रधानार्थत्वस्यापि सम्भवेन सुतरामतिदेशसम्भवेनानुवादे बाधकाभावात्। अतिदेशासम्भवेऽपि लोकत एवार्थाक्षिप्तस्य तस्यानुवादस्य सुलभत्वाच्च निर्वापोऽपि विधेय एवास्त्वितिपक्षस्य स्वयं दर्शितत्वाच्च।

अथैवं "यदि राजन्यं वैश्यमि"त्यादिवाक्ये श्रुता न्यग्रोधस्तिभिनीभक्षमात्रार्था, न तु यागार्थापि। यागस्याश्रुतत्वादितिपूर्वपक्षे, भक्षशब्दस्यानुवादकस्य प्राकरणिकसोमसंस्कारभक्षपरत्वात्तद्विषया स्तिभिन्यपि सोमवत् संस्कार्यैव ग्राह्या। संस्कार्यत्वं च तस्या न यागसाधनत्वमन्तरेणेति यागीयत्वमप्यस्तीति, तत्र यजमानयागाभ्यासे सोमस्य बाध इति सिद्धान्तः स न स्यात्, "भक्षयेदि"त्यादिवाक्येष्वप्युक्तरीत्या सोमासाधारणापूर्वार्थत्वे भक्षस्यावगते तादृशापूर्वीयत्वस्य स्तिभिन्यामभावेन भक्षस्य तस्यामनन्वये तन्मूलस्य स्तिभिनीयागसम्बन्धस्यापि भङ्गादिति चेत्। उच्यते। इदं तावन्न विस्मर्तव्यम्—यदहं पूर्वपक्षी। यूयं सिद्धान्तिनः—इति। तस्माद्वारं वारं सर्वशास्त्रव्याकुलीकरणेन प्रवृत्तं मां प्रति नाभ्युपगमविरोध उद्भाव्यः, तस्य मदिष्टत्वात्। किं चान्यसंस्कारक एव भक्षे स्तिभिनि विधिः। मन्त्रान्तरावरुद्ध एवाधारे हिरण्यगर्भमन्त्रविधिवत् सम्भवत्येवेति न सिद्धान्तविरोधोऽपि।

अपि च भक्षान्तरमेव विधीयताम्। तथापि न सिद्धान्तहानिः। "न गिरागिरेति ब्रूयादि"तिवत् "न सोममि"ति निषेधानुवादनिश्चये तद्बलेन तत्स्थानापन्नस्य स्तिभिनीभक्षस्य तत्कार्ययागीयद्रव्यसंस्कारार्थत्वस्य सिद्धौ, स्तिभिन्याः सोमविकारत्वसम्भवात्।

एतेन व्रीह्यादिपदमहिम्ना तद्गतापूर्वीयत्वस्यैव द्वारत्वे। "नैमित्तिकमतुलत्वादसमानविधानस्यादि"त्यधिकरणे पूर्वपक्षानुत्थितिः स्यात्। "सोममभिषिणोती"त्यादिष्वभिषवस्य सोमासाधारणापूर्वीयत्वार्थस्य फलचमससाधारण्यप्रसक्त्यसम्भवेन धर्मसामान्यविध्याशंकानवकाशादित्यपास्तम्, सिद्धान्त्यभिमतापूर्वीयत्वलक्षणावष्टम्भेन पूर्वपक्षप्रवृत्तिसम्भवात्। तदसम्भवेऽप्यसदनिष्टाभावस्योक्तत्वाच्च।

किं चात्र संस्काराणां व्रीहित्वादिप्रयुक्तत्वमेवाङ्गीकर्तुं प्रोक्षणादीनां व्रीहिद्वारा दर्शपूर्णमासापूर्वं प्रति व्याप्रियतेत्यर्थं इत्युक्तत्वात्, बाधकाभावाच्च। तथा च व्रीह्यसाधारणापूर्वार्थत्वस्यानुक्तत्वाद्दूषणमस्माभिर्न परिहार्यमिति यत्किञ्चिदेतत्।

यत्वस्माभिरपूर्वीयलक्षणाखण्डनग्रन्थे लक्षणा न सम्भवति। तदङ्गीकारेऽपि व्रीहिपदमहिम्ना तद्गतमपूर्वीयत्वमेवापूर्वीयत्वत्वाकारेणापि लक्ष्येत। गंगापदमहिम्ना गंगातीरमिव तीरत्वेनापि। तथा च लक्षणयापि संस्काराणां यवसाधारण्यालाभादित्युक्तम्। तत्रेदं दूषणं स्याद्वस्तुतस्तदपि न सम्भवति। तत्राप्यभ्युपगमविरोधमात्रेणोपस्थितं विहायान्यत्र लक्षणाया अन्याय्यत्वात्।

एतेन "न चैवमि"त्यादिना सोमसंस्काराणां फलचमससाधारण्यमपूर्वीयलक्षणावष्टम्भेनाशङ्कितवन्तं प्रति संस्कारवाक्येषु सोमशब्देन फलचमसत्वाकारेण निर्दिष्टस्यैवार्थलभ्यापूर्वीयत्वस्य द्वारत्वं पूर्वपक्ष्यभिमतमिति मत्वा सिद्धान्तिना नित्यानित्यसंयोगविरोधोद्भावनं युक्तमेव कृतमित्यपास्तम्, भ्रान्त्या सिद्धान्तप्रवृत्तिरित्यस्यैवायुक्तत्वात्। लक्षितापूर्वीयत्वाकारेणोद्देशे नित्यानित्यसंयोगाभावेन फलचमसे धर्मसमानविध्यापत्त्या सिद्धान्तोच्छेदाच्च।

न च नित्यशास्त्राणां नैमित्तिकशास्त्रेभ्यः प्रथमप्रवृत्त्या तस्यां दशायां नैमित्तिकसाधारण्यस्यापूर्वीयत्वस्यानवगत्या लक्षणीयत्वाभावेन संस्काराणां न नैमित्तिकसाधारण्यापत्तिरिति वाच्यम्। एवं ह्यनवगते लक्षणा नास्तीत्यभ्युपगमे "व्रीहीनवहन्ती"त्यादावपि "व्रीहिभिर्यजेते"ति शास्त्रादनन्तरप्रवृत्तिकत्वे मानाभावेन, समकालप्रवृत्तिकत्वे तदानीमपूर्वत्वीयानवगत्या लक्षणा न स्यात्।

न च संस्कारवाक्यानां व्रीहिशास्त्रसमकालप्रवृत्तित्वे संस्कारकर्मतैव न स्यात्। यागीयत्वेनानवगतानां संस्कार्यत्वायोगादिति वाच्यम्। "तप्ते पयसि" इत्यादाविव सम्भावितयागीयत्वानामपि संस्कार्यत्वसम्भवात्।

अथ व्रीह्यादेरेकवाक्यतयैवापूर्वीयत्वपर्यवसाने दध्यानयनस्यापि तद्वदेवामिक्षाविध्येकवाक्यतयापूर्वीयत्वलाभे "सा वैश्वदेवी"त्यत्र सापदवैयर्थ्यं स्यात्। यदि च व्रीह्यादेरपूर्वीयलक्षणयैव तत्पर्यवसानम्।

दध्यानयनस्थले चापूर्वीयत्वस्य प्रागनावगततया लक्षणाया असम्भवात्, संस्कृतपयोविनियोजक "सा". पदं सार्थकमेवेति, तदा सिद्धमेव संहितमिति चेत्। मैवम्। अवगते लक्षणेत्यङ्गीकारे व्रीह्यादिपदेष्वपि "व्रीहिभिर्यजेते"त्यादिशास्त्रसमकालप्रवृत्तिकसंस्कारवाक्यस्थेष्वपूर्वीयत्वस्य प्रागनवगत्या लक्षणासम्भवस्योक्तत्वात्।

किंच "सा"पदाभावे "वैश्वदेव्यामिक्षे"त्येतावन्मात्रेणामिक्षापदार्थ-साधनकयागावगत्याऽऽमिक्षापदार्थस्यापूर्वीयत्वावगतावपि पय एवामिक्षेत्यत्र प्रमाणाभावेन पयस्यपूर्वीयत्वमेकवाक्यतयापि न लभ्यते !

व्रीहिसोमादीनां तु संस्कारवाक्यस्थानां वाक्यान्तरे यजिनान्वयदर्शनात् तदेकवाक्यतया युक्तमपूर्वीयत्वं लभ्यत इति। तथा च "सा" पदस्य प्रकृतप्रधान-परामर्शिनो महिम्नैव पयसोऽपूर्वीयत्वलाभः, न लक्षणया। न वा एकवाक्यतयेति, कथं "सा" पदवैयर्थ्यम् ?।

न चामिक्षा पय एवेति लोकसिद्धम्। अतः किं "सा" पदेनेति वाच्यम्। लोकतोऽसिद्धेः। अन्यथा "आमिक्षोभयभाव्यत्वादुभयविकारः स्यादि"ति आश्रमिकाधिकरणवैफल्यप्रसङ्गात्। तत्र हि आमिक्षादोहद्वयविकारो वा, सायं दोहविकारो वा, प्रातर्दोहविकारो वेति विशये, आमिक्षासमानाधिकरण-"सा" शब्देन सन्निहितदध्यानयनवाक्यस्थयोर्दधिपयसोः परामर्शात् तत्समा-नाधिकरणामिक्षाशब्दार्थोऽपि "दधिपयसी"इत्युभयविकारः। सर्वनाम्नां प्रकृत-प्रधानपरामर्शित्वेऽपि द्वितीयासंयोगात् प्रधानं दध्येव "सा" शब्देन परा-मृश्यत इति सायंदोहविकारो वा आमिक्षेति पूर्वपक्षे, दध्नापि व्याप्यमानत्वेन ततोऽपि प्रधानं पय एव सा पदवाच्यमिति प्रातर्दोहविकार एवामिक्षेति सिद्धान्तितम्।

तद्व्यर्थं स्यात्। आमिक्षाया लोकत एव निश्चितार्थकत्वे हि "सा" पद-सामानाधिकरण्यनिश्चेयार्थत्वमभिप्रेत्य, तदर्थं "सा" पदार्थविचारस्यानु-पयोगात्।

ननु यत्किंचिद्द्रव्यकेऽपि वैश्वदेवयागे पयसस्तदीयद्रव्यत्वेनानिश्च-येऽपि दध्यानयनवाक्यस्यामिक्षावाक्यैकवाक्यतायां तदपूर्वार्थत्वमवर्जनीयमेव पयस इति चेत्। किमतः ? तदा हि पयसः सक्तुवत् प्रयाजीयद्रव्यवच्च कर्म-द्वारैव प्रधानान्वयः स्यात्, न साक्षात्। तच्च न संस्कारकर्मताप्रयोजकम्, सक्तुस्थलेऽदृष्टत्वात्।

यत्तु संस्कारकर्मताप्रयोजकं साक्षाद्यागीयत्वमिष्यते, तत्तु "सा" पद-बलादेव लभ्यते, न त्वेकवाक्यतया।

अपि च संस्कार्यताप्रयोजकेनापूर्वीयत्वेन रूपेणोपस्थित एव संस्कार-विधिप्रवृत्तिरित्यभ्युपगमे प्रकृते सत्यपि "सा" पदे तद्वाक्यात्प्रथमप्रवृत्तिके दध्यानयनवाक्ये पयसोऽपूर्वीयत्वेनोपस्थितेः कथमप्यसम्भवात्, अर्थकर्मविधाय-कत्वापत्तौ आमिक्षावाक्येन "सा" शब्दवतापि आनयनविध्यन्वितपयःसंस्कार-

कयागस्य स्विष्टकृद्यागवद्विधेयत्वापत्त्या संस्कार्यतावच्छेदकरूपेणानुपस्थितावपि संस्कारवाक्यप्रवृत्त्यभ्युपगमावश्यम्भावेनापूर्वीयलक्षणाया अनावश्यकत्वे सिद्धे "सा" पदसाफल्य—वैफल्ययोर्विचार्यत्वात्।

अथ "यावत्या वाचा कामयेत, तावत्या दीक्षणीयायामनुब्रूयादि"ति श्रुतस्वरविशेषविधेः प्रधानज्योतिष्टोमविध्येकवाक्यतायां सत्यां स्वरविशेषेण दीक्षणीयाद्वारा स्वर्गार्थं ज्योतिष्टोमापूर्वं प्रतिव्याप्रियेत इत्यर्थपर्यवसानसम्भवात् ज्योतिष्टोमापूर्वार्थत्वे सिद्धे स्वरविशेषस्य न दीक्षणीयापूर्वार्थत्वं स्यादिति चेत्। न। व्रीहिस्वरूपार्थस्यैव ह्यवघातस्य प्रधानार्थतैकवाक्यतया कल्प्यते। प्रकृते तु स्वरविशेषस्य दीक्षणीयार्थत्वे सिद्धे तदनन्तरं प्रधानैकवाक्यता न कल्प्येत। व्रीहिस्वरूपार्थत्वे धर्मस्यानर्थक्यवत् दीक्षणीयापूर्वस्याप्यदृष्टरूपतया परमापूर्वतुल्यशीलत्वेन तादर्थ्ये वैयर्थ्याभावात्। वैयर्थ्यपरिहारार्थमेवैकवाक्यताकल्पनात्।

एवं चैकवाक्यतामूलपरमापूर्वार्थत्वाभावात् न दीक्षणीयार्थत्वहानिः। किं च व्रीह्यर्थस्यैव सतोऽवघातस्येव दीक्षणीयार्थस्यैव सतः स्वरविशेषस्य प्रधानैकवाक्यतयापि तादर्थ्यं स्यात्। तथा च का प्रसक्तिः प्रथमागतस्य दीक्षणीयार्थत्वस्य हानिरिति।

अपि च स्वरविशेषेण दीक्षणीयाद्वारा ज्योतिष्टोमापूर्वं प्रति व्याप्रियेतेत्यर्थपर्यवसानमङ्गीकुर्वतां कथं दीक्षणीयापूर्वप्रयुक्तत्वहानिरिति वाचोयुक्तिरपि, तदपूर्वार्यत्वाभावे तेनैवापूर्वेण व्यवधानेन दीक्षणीयाया द्वारत्वायोगात्।

अपि च महाप्रकरणेनैकवाक्यताकल्पनमेव न सम्भवति। ततोऽपि बलीयसा वाक्येन स्वरविशेषस्य दीक्षणीयार्थत्वे निश्चिते एकवाक्यताप्रयोजकाकांक्षामूलोच्छेदात्। किं च पूर्वपक्षिणो मम यवसाधारण्यभङ्गवत् स्वरविशेषस्य दीक्षणीयार्थत्वभङ्गोऽपि नानिष्ट इति क्षुण्णः पन्थाः।

किंचावघातादेः स्रुवादिसाधारण्यप्रसङ्गादपि नापूर्वीयलक्षणा। न च गङ्गापदमहिम्ना गङ्गातीरस्यैव तीरत्वेनेव तण्डुलादिप्रणाड्याऽपूर्वसाधनस्यैवापूर्वीयत्वेन लक्ष्यत्वान्नातिप्रसङ्ग इति वाच्यम्। एवं हि व्रीहिणामेव संस्कार्यत्वापत्त्या यवसाधारण्यं न स्यात्। वस्तुतो व्रीहिनिष्ठापूर्वीयत्वविशेषस्य स्रुवादिभ्यः इव यवेभ्योऽपि व्यावृत्तत्वात्।

यत्त्वपूर्वीयमात्रोद्देशेन विधानेऽपि नातिप्रसङ्गः। विधेः दृष्टार्थत्वाय व्रीहि–यवयोरेवावघातसम्भवादिति। तन्न। "ब्राह्मणान्भोजयेदि"त्यादावपि विधेर्दृष्टार्थत्वायैव यद्ब्राह्मणविषयत्वे प्रत्युपकारादिदृष्टार्थत्वं सम्भवति, तद्ब्राह्मणमात्र-

विषयत्वापत्तेः। "व्रीहीनवहन्ती"त्यादौ व्रीहिपदस्य लौकिक-वैदिकव्रीहिसाधारण्येऽपि लौकिकव्रीह्यंशेऽर्थकर्मत्वापत्त्याऽदृष्टार्थत्वं स्यादिति तत्परिहारेण दृष्टार्थत्वाय वैदिकव्रीहिमात्रविषयत्वोपपत्तौ स्वकृतविधिवैरूप्यप्रसङ्गापादनविरोधात्। अदृष्टार्थप्रोक्षणादेः स्रुवाद्यतिप्रसङ्गानिवारणाच्च।

न च निर्वापावघातादिसन्दंशात् प्रोक्षणमपि व्रीहिष्वेव व्यवतिष्ठेतेति वाच्यम्। त्रयाणामपूर्वीयमात्रोद्देशेन प्रवृत्तौ निर्वापावघातयोर्दृष्टार्थत्वाय व्रीहिष्वेव सङ्कोचेऽपि तादृशप्रयोजनविशेषालाभे प्रायपाठात्मकसन्दंशमात्रेण "व्रीहीन् प्रोक्षती"ति लक्षणापत्ते वाक्यगम्यस्य स्रुवादिप्रोक्षणसम्बन्धस्य निर्निमित्तमेव, बाधायोगात्।

यदपि छागपशुन्यायेन 'अग्नये वो जुष्टं प्रोक्षामी'ति मन्त्रवशात् सामान्येनोपात्तापूर्वसाधनरूपस्य विशेषपर्यवसानान्न साङ्कर्यमिति, तदपि नायं मन्त्रः किमाग्नेयापूर्वसम्बन्धिमात्रप्रकाशकः, किं वाग्नेयहविर्मात्रप्रकाशकः, उताग्नेयव्रीहिमात्रप्रयोजकः?। नाद्यः—स्रुवाद्यतिप्रसङ्गतादवस्थ्यात्। लिङ्गाविशेषेण मन्त्रस्यापि स्रुवादिसाधारण्ये छागपशुन्यायानवतारेण तद्वशेन प्रोक्षणस्य सङ्कोचायोगात्।

न द्वितीयः। तादृशहविःशब्दस्य मन्त्रेऽभावेन प्रमाणाभावात्। अत एव न तृतीयोऽपि। तत्र व्रीहिशब्दस्याप्यभावात्। एवमपि व्रीहिमात्रविषयत्वापत्त्या यवसाधारण्यालाभापत्तेश्च।

न च तण्डुलनिष्पत्तिप्रणाड्याऽपूर्वसाधनत्वस्य विवक्षितत्वान्नातिप्रसङ्ग इति वाच्यम्। विशिष्टोद्देशापत्तेः। न चैकेन पदेनोद्देशान्नैष दोष इति वाच्यम्। 'ग्रहं सम्मार्ष्टि, तेषां तरसमयाः सवनीयाः पुरोडाशा भवन्ती'त्यादावप्येकत्वविशिष्टग्रहादेरेकेन ग्रहादिशब्देन लक्षणयोद्देशसम्भवे विशिष्टानुवाददोषाभावेन तत्तदधिकरणोच्छेदापत्तेः। 'यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ती'त्यत्र तु तेनेति सर्वनाम्ना शक्त्यैवाग्नीषोमीयप्राचीनत्वविशिष्टपदार्थोद्देश इति वैषम्यम्।

वस्तुतस्तु लघुनापूर्वीयत्वस्यैवोद्देशसम्भवे स्रुवादिव्यावृत्त्यर्थमेव तण्डुलप्रणाडिकत्वविशेषणस्यायुक्तत्वात् स्रुवादिकं व्यावर्तनीयमित्यस्य प्रमाणान्तरेणाज्ञानात्। स्वेच्छया व्यावर्तने यवेभ्योऽपि व्यावृत्त्यर्थं व्रीहित्वेनापि विशेषणप्रसङ्गात्।

न च व्रीहित्वस्यापि विशेषणे वृत्तिद्वयविरोध इति वाच्यम्? गङ्गेशोक्तरीत्या तस्यादोषत्वात्। विशिष्टस्य शक्यादन्यत्वेन तस्य लक्ष्यत्वे वृत्तिद्वयाभावाच्च। अन्यथा मनोतास्थाग्निशब्दोऽग्नीषोमौ न लक्षयेच्च।

किं च व्रीहिपदप्रवृत्तिनिमित्तसमानाधिकरणापूर्वीयत्वादिना लक्ष्यतापत्तौ वृत्तिद्वयप्रसक्तेरप्यभावेन यवव्यावृत्त्यापत्तेः। यदिदं विशेषणं संस्कारविधिप्रवृत्तेः प्राङ्नियमेन नाधिगतमिति, नास्य लक्ष्यत्वसम्भवः, तर्हि तण्डुलादिप्रणाड्यापूर्वीयत्वमपि प्रोक्षणादिविधिप्रवृत्तेः प्रागनवगतमेव व्रीहितण्डुलीकरण–चूर्णीकरणादिविधायकवाक्यप्रवृत्त्यनन्तरमेव न प्रोक्षणविधिना प्रवर्तितव्यमिति निर्बन्धोऽस्ति। तथा च तण्डुलप्रणाड्यापूर्वसाधनत्वस्यापि न लक्ष्यत्वं स्यात्।

यदि मतं 'व्रीहीनवहन्ती'त्यादिश्रुतिदशायां स्रुवादिसाधारण्याप्रतीत्या तद्व्यावृत्त्यर्थं लक्षणायां प्रयत्यत इति। तर्हि तस्यां दशायां यवसाधारण्यस्याप्यप्रतिपत्त्या तद्व्यावृत्त्यर्थमपि प्रयत्यताम्।

ननु 'येन कर्मणेर्त्सेत्तत्र जयान् जुहुयादि'तिवत् यत्तच्छब्दाभावेनैकवाक्यतानिर्वाहार्थं प्रोक्षणादावश्रुतकल्पनापेक्षया श्रुतशब्दस्यैव लक्षणाकल्पनं युक्तमिति चेत्। एवं 'समिधो यजती'त्याद्यारादुपकारकस्थलेऽपि श्रुतपदे लक्षणासम्भवे वाक्यं न कल्प्येत। विशिष्टविधिस्थले श्रुतपद एवोचितलक्षणासम्भवे विशेषणेषु विधिर्न कल्प्येत। तथा विश्वजिदादावपि स्वर्गो न कल्प्येत, लक्षणासम्भवात्।

## अत्र विषये सोमनाथोक्तं समाधानं कथंचिच्छङ्कयोपपादनम्।

यस्त्वत्र स्वतो निराकाङ्क्षाख्यातद्वयस्थले आकाङ्क्षार्थं यत्तच्छब्दकल्पनेऽपि "तीर्थमेव समानानां भवति" इत्यादाविव स्वतः साकाङ्क्षयोः संस्कारप्रधानवाक्याधिकारवाक्ययोर्न शब्दकल्पनाप्रसक्तिरिति स्वगुरूणां परिहारः। स यद्यप्येकवाक्यताकल्पनार्थं शब्दान्तराकल्पनेऽप्येकवाक्यताकल्पनमूलभूतायाः संस्कारप्रधानवाक्ययोः फले उपकारापेक्षाया एकवाक्यताकल्पनार्थदशान्तरायाः शब्दान्तरायाः प्रोक्षणादिभिर्व्रीहिद्वारापूर्वं प्रत्युपकुर्यादिति वाक्यकल्पनेन, छेदेन तादृशवाक्य–कल्पनस्यावश्यकत्वात्, तदपेक्षया लघ्वी लक्षणैव कल्प्यत इति परिहर्तुं शक्यते।

## विधिदर्पणोक्तं तु सर्वथाऽयुक्तमिति।

तथापि तत्रारादुपकारकाणां स्वत एवाकाङ्क्षासत्त्वेऽप्यवघातादिसन्निपातिनां स्वस्ववाक्यसमभिव्याहृततद्द्रव्यान्वयेनापि निराकाङ्क्षत्वसम्भवेन

शब्दकल्पनां विना प्रकरणेनैकवाक्यताया अयोगादिति स्वपरिहारस्तु स्वविरुद्धः। स्वस्ववाक्यश्रुतव्रीह्यादिसम्बन्धेन नैराकाङ्क्ष्येऽश्रुतशब्दकल्पनवल्लक्षणाया अप्यनपेक्षाप्रसंगात्।

किञ्चैवमेकेन पदेनोद्देशे वाक्यभेदाभावे व्रीहित्वस्यापि विवक्षा स्यात्, उपस्थितत्वात्, जातित्वेन लघुत्वाच्च। न तु तण्डुलप्रणाडीकत्वस्य, हविःप्रकृतित्वस्य वा तयोः प्राकरणिकवाक्यान्तरपर्यालोचनया विलम्बेन कथंचिदुपस्थितत्वात्, उपाधित्वेन गुरुत्वाच्च।

अपि चैवमपूर्वीयं व्रीह्यादीत्युक्ते तद्रूपोपहितेऽवघातस्य लोकादप्राप्तत्वेन नियमविधित्वमुच्छिद्येत। किञ्च वैकल्पिकयोर्व्रीहि–यवयोः शास्त्रदृष्टयैकापूर्वसाधनत्वेऽपि तत्तत्साध्यापूर्वव्यक्तिभेदस्यावश्यकतया तस्यैव व्रीहिशब्देन प्रत्यासत्तिविशेषादुपस्थाप्यत्वेन न संस्काराणां यवसाधारण्यप्रसक्तिः। अन्यथा प्रत्यासत्तिविशेषापुरस्कारे ग्रहे श्रुतस्सम्मार्गादिश्चमसेऽपि स्यात्। द्वयोरपि ज्योतिष्टोमापूर्वसाधनत्वात्।

यत्तु "व्रीहीणां मेध"इति मन्त्रस्थव्रीहिपद एवापूर्वविशेषलक्षणा। तां विना लिङ्गानिर्वाहादिति। तत्तुच्छम्। तल्लक्षणायाः प्रमाणाभावात्। प्रत्युत लिङ्गस्वारस्यभंगाच्च।

किंच 'व्रीहिभिर्यजेते'ति शास्त्रादपूर्वीयत्वमात्रावगतावपि स्रुवादिव्यावर्तनाय तण्डुलप्रणाडीकत्वस्य, हविःप्रकृतित्वस्य वा विवक्षणीयस्य प्राकरणिकावघातादिवाक्यप्रसादलभ्यतयावघातादिवाक्यप्रवृत्तेः प्रागनवगमेनावघातादिवाक्यस्थव्रीह्यादिशब्दैः कथं तल्लक्ष्यताम्? आत्माश्रयादिप्रसंगात्।

अपि च यदपूर्वीयत्वमवगतम्, तल्लक्षणीयं वा, यस्यापूर्वीयत्वमवगतं तल्लक्षणीयं वा, मूले सोमनिष्ठं यज्ज्योतिष्टोमापूर्वसाधनत्वं तदेव फलचमसेऽपि आश्रययोर्भेदेऽप्यनुगतबुद्ध्या तस्यैक्यात्, भेदे मानाभवात्, तच्च क्रयादिवाक्यसचिवेन' सोमेन यजेते'ति वाक्येनावगतमेव लक्ष्यत इति, तदुद्देशेन विधीयमानाः संस्कारास्तदाश्रयत्वाविशेषात् सोमव्यक्तिष्विव फलचमसव्यक्तिष्वप्युपदेशत एव प्राप्नुयुः।

न च फलचमसस्य वृत्तिविषयत्वाभावे तत्र शाब्दधर्मान्वयासम्भात् सोऽपि लक्षयितव्यः। तच्च न सम्भवति, तस्य नैमित्तिकस्य नित्यसंस्कारविधिप्रवृत्तिवेलायामनवगतत्वादिति वाच्यम्। आकृतिवादे प्रवृत्तिविषयत्वाभावेऽप्याक्षेपलभ्याया एव व्यक्तेरन्वयबोधविषयत्वाङ्गीकारात्।

न द्वितीयः। "अनन्यलभ्यशब्दार्थः" इति न्यायेनाक्षेपलभ्यत्वाद्व्यक्तौ शक्तिमप्यनिच्छतां व्यक्तेरलक्ष्यत्वे तस्याः पूर्वावगतेर्व्यर्थत्वात्। अन्यथा वृत्तिविषय एव धर्मान्वयांगीकारे सामान्यप्रत्यासत्तिमनभ्युपगच्छद्भिर्मीमांसकैः 'सोमेन यजेते'त्यादौ सोमादिपदेन यावत्सोमव्यक्तीनां विषयीकरणासम्भवेन यैव काचित्सोमव्यक्तिः सोमशास्त्रपदार्थोपस्थित्यन्वयबोधयोरविषयः, तस्याः प्रयोगवेलायां दैवादुपादानप्रसक्तौ तत्रापि फलचमसवत् क्रयादेरतिदेशापत्तिः।

किंच 'व्रीहीनवहन्ती'त्यादौ संस्कार्यतावच्छेदकापूर्वीयत्वाकारेणोपस्थितेष्वेव व्रीहिषु संस्कारान्वयाङ्गीकारे 'घटेन जलमाहरेदि'त्यादावपि छिद्रेतरत्वादेर्घटपदलक्ष्यत्वापत्तिः। 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादावपूर्वस्यापि वाच्यत्वापत्तिः।

यत्तु सामान्येन 'व्रीहिभिर्यजेते'ति शास्त्रार्थापूर्वसाधनत्वमेव विवक्षितम्, न तु तद्विशेषसाधनत्वमिति। तन्न। एवं फलचमसवत् स्रुवादिषु सांकर्यापत्तेः। प्रत्यासत्तिविशेषेणोपस्थितस्य विशेषसाधनत्वस्यैव विवक्षौचित्ये उपस्थितिशैघ्र्याप्रयोजकस्य सामान्यात्मकत्वमात्रस्याप्रयोजकत्वात्।

अपूर्वमात्रस्य कल्प्यत्ववादे कस्यचित् शास्त्रार्थत्वम्, कस्यचिदशास्त्रार्थत्वमिति व्यवस्थाया अयोगाच्च। व्यक्तिविषयत्वरूपस्य शास्त्रार्थत्वस्य क्वाप्यभावात्, श्रुतान्यथानुपपत्तिकल्प्यत्वरूपस्य सामान्यविशेषापूर्वसाधारणत्वात्। एतेन 'न चैवमित्यादि, किंचेत्यन्तं' निगदनिराकरणम्।

यत्तु किंच भक्षणादिसंस्कारान्वयमुखेन फलचमसादेर्यागापूर्वसाधनत्वं कल्प्यम्। तथा च यागापूर्वसाधनत्वेऽवगते संस्कारवाक्येष्वपूर्वीयत्वेनोद्देशात् संस्कारान्वयः। सति च संस्कारान्वयेऽपूर्वसाधनतावगतिरित्यन्योन्याश्रयादिति, तदसारम्। एतेन हि संस्काराणां न फलचमससाधारण्यम्। तस्यैव लक्ष्यत्वे व्रीहिसोमादिसंस्कारवाक्यानां 'व्रीहिभिर्यजेते'त्यादिशास्त्रसमकालप्रवृत्तिकत्वसम्भवेन व्रीहिशास्त्रप्रवृत्त्यनन्तरं संस्कारविधिभिः प्रवर्त्तितव्यमिति निर्बन्धाभावेन संस्कारवाक्यस्य व्रीह्यादिपदेष्वपि लक्षणानापत्तेरुक्तत्वात्। व्रीहिसोमादिशास्त्रप्रवृत्त्यनन्तरमेव संस्कारप्रवृत्त्यभ्युपगमेऽपि सोमशास्त्रावगतापूर्वीयत्वस्यैव लक्ष्यत्वेऽपि तदवच्छिन्नत्वात्फलचमसानां तत्रापि संस्काराः स्युरेव। यस्यापूर्वीयत्वमवगतम्, तस्यैव लक्ष्यत्वे कस्याञ्चिद्व्रीहिसोमादिव्यक्तौ कदाचित्केनचित् व्रीहिसोमादिशास्त्रेण यागसाधनतयानवगतायां तत्संकाराणामतिदेशापत्तेरप्युक्तत्वात् "न सोममि"ति प्रतिषिध्य विधाना-

दपि फलचमसस्य यागीयत्वं सुलभमिति नावश्यं भक्षसम्बन्धापेक्षा, येनान्योन्याश्रयः। प्रतिनिधिभूतनीवारादिषु समग्रावयवालाभे निमित्तेऽपूर्वीयतयावगन्तव्येषु संस्कारसाधारण्यभावापत्तेर्मूल एवोक्तत्वाच्च।

न च संस्कार्यतया व्रीह्यादेरन्वयसिध्यर्थं व्रीहिशास्त्रं प्रतीक्ष्यैव संस्कारवाक्यैः प्रवर्तितव्यमिति वाच्यम्। "तप्ते पयसी"ति वाक्यदृष्टान्तेनानार्थक्यपरिहारे सिद्धे "व्रीहीनवहन्ती"त्यादौ लौकिकवाक्यवदन्वयोपपत्तौ व्रीहिशास्त्रप्रतीक्षणाकर्तव्यत्वस्याप्युक्तप्रायत्वात्।

अत एवानित्यफलचमसस्य नित्यक्रयादिद्वारकत्वे नित्यानित्यसंयोगापातः। नैमित्तिकफलचमसेऽपूर्वीयत्वस्यानवगतत्वात्, साधारणलक्षणाया अप्ययोगादित्यपास्तम्, लक्षणायां तत्र तद्धर्मावगतेरनपेक्षितत्वस्योक्तत्वात्। उद्देश्यतावच्छेदकापूर्वीयत्वाकारेण नित्यत्वेऽपि प्रातिस्विकफलचमसत्वाकारेणानित्यत्वादेव नित्यानित्यसंयोगे नीवारगतव्रीह्यवयवेष्वपि तदापत्तेः।

व्रीहित्वेन नित्यत्वेऽपि तेषां प्रातिस्विकरूपेणानित्यत्वात्। अपि चापूर्वीयत्वलक्षणा न युक्तैव। तथात्वे यववत् फलचमसेऽपि धर्माणामुपदेशतः प्राप्तिप्रसङ्गात्।

ननु नैमित्तिकानामपूर्वीयत्वं संस्कारवाक्यप्रवृत्तेः पूर्वं नावगतमिति चेत्। किमतः ? तथात्वे लक्षणासम्भवस्योक्तत्वात्।

किञ्च एवं सति प्रतिनिधिषु धर्मसामानविध्यन्न स्यात्। तेषां मुख्यालाभे निमित्ते उपादीयमानानां संस्कारविधिप्रवृत्तिवेलायामपूर्वीयत्वेनानवगतत्वात्।

अथ "व्रीहिभिर्यजेत, सोमेन यजेत, पशुना यजेते"त्यादिषु व्रीह्यादिशब्दैराकृतेर्यागार्थत्वेऽवगते तन्निर्वाहार्थं द्रव्याक्षेपे प्रसक्ते व्यक्तिवत्तदवयवा अप्याक्षिप्यन्ते, जातिपरिच्छेद्यत्वाविशेषात्, यागनिर्वर्तकत्वाविशेषाच्च। तथा च जाति-व्यक्ति-तदवयवास्त्रयोऽपि शास्त्रतात्पर्यविषया एवेति व्यक्तिवत्तदवयवानामप्यपूर्वीयत्वावगतेः संस्कारवाक्यस्थव्रीह्यादिशब्दलक्ष्यत्वादवयवानां नीवारादिगतानामस्ति धर्मसामानविध्यम्। फलचमसस्य तु व्रीह्यादिशास्त्राविषयस्य लक्षयितुमशक्यत्वात् न धर्मसामानविध्यमिति चेत्। उच्यते। पिष्टपेषणमेतत्, यत्–यत्रैवापूर्वीत्वमवगतम्, तत्रैव न धर्मान्वयः। सामान्यप्रत्यासत्तिमनिच्छतां व्रीह्यादिशास्त्रप्रवृत्तिवेलायां दैवादनवगतव्रीह्यादिव्यक्तिष्वेव धर्मातिदेशापत्तिरिति। यद्वाकृतिपुरस्कारेण यद्धर्मविधिस्तदुपरक्तव्यक्तिषु प्रागुपस्थितास्वनुपस्थितासु वा तद्धर्मान्वय इति च हेतोः पश्चादुपस्थितेष्वपि फलचमसेषु वस्तुतोऽपूर्वीयत्वक्रोडीकृतत्वाद्धर्मसांकर्यापत्तिरिति।

किञ्च व्रीह्यादिशास्त्रेण कथमवयवाक्षेपः ? अवयवानां जातेश्च परम्परासम्बन्धात्। साक्षात्सम्बन्धितया झटित्युपस्थितव्यक्तिमात्राक्षेपेण जातिश्रुतेः क्षीणार्थापत्तित्वात्। न चावयवावयविनोरभेदादवयवोपि शास्त्रार्थ इति वाच्यम्, प्रामाणाभावादपसिद्धान्ताच्च। "अग्निधर्मः प्रतीष्टकं संघातात्पौर्णमासीवत्" ९-१-२६ इति नावमिकाधिकरणेऽवयवेभ्योऽर्थान्तरमयविनमङ्गीकृत्य, तस्यैवाग्निशब्दार्थत्वमपि स्वीकृत्य सकृदेव तस्यैकत्वाद्धिरण्यशकलप्रोक्षणमिति सिद्धान्तितत्वात्।

अत एव व्यक्त्यवयवयोर्जात्या तुल्य एव सम्बन्धः। तथा चावयवपर्यन्तः शास्त्रार्थ इत्यपास्तम्। तथात्वेऽग्नितदवयवयोरपि शास्त्रार्थतायां प्रतीष्टकं प्रोक्षणापत्तेः।

यत्त्ववयविना यागे निर्वर्त्यमाने विनिगमनाविरहादवयवैरपि स निर्वर्त्य एवेति। किमतः ? तावता तद्गतरूपादेरपि शास्त्रार्थत्वापत्तेः।

नन्वेवं तन्त्ररत्नोपपादनविरोधः। सिद्धान्तविरोधावधीरणे चाग्निधर्माधिकरणविरोधोद्भावनव्याघात इति चेत्। मैवम्। पूर्वपक्षिणा मया युक्तिविरोधादेव भेतव्यम्, नाभ्युपगमविरोधात्। अन्यथा तत्तत्सिद्धान्तविरोधे सर्वपूर्वपक्षविलयापत्तेः। त्वया तु सिद्धान्तिना सर्वसिद्धान्तविरोधः सर्वथा परिहार्य एवेति त्वां प्रति युक्तमेवाग्निधर्माधिकरणसिद्धान्तविरोधोद्भावनमिति द्रष्टव्यम्।

किञ्च यद्यवयवानां शास्त्रार्थत्वं स्यात्, तदा व्रीहिनीवारोभयसमवधाने कदाचिदिच्छया नीवारोपादानापत्तिः। तेष्वपि शास्त्रार्थीभूतव्रीह्यवयवसत्त्वात्।

न च तत्राल्पा व्रीह्यवयवाः, व्रीहिषु तु भूयांस इति भूयोऽवयवलिप्सया व्रीहीणामेवोपादानमिति वाच्यम्। शास्त्रार्थावयवलाभे भूयस्त्वस्य व्यर्थत्वात्। अथाश्वशफपरिमाणविधानात् तदनुरोधेन तदवयवभूयस्त्वमपि शास्त्रतात्पर्यार्थं एवेति चेत्। तावतात्यन्ताधिकनीवारोपादानप्रसंगात्। अश्वशफपरिमाणपुरोडाशार्थं यावन्तो व्रीह्यवयवा अपेक्षितास्तावतामपि तन्मध्ये लाभसम्भवात्, अवर्जनीयसन्निधाननीवारावयवसंयोगप्रयुक्तपरिमाणाधिक्यस्यादोषत्वात्।

न चैवमपि व्रीहिजातिव्यक्त्योः शास्त्रार्थीभूतयोरनुग्रहो न स्यादिति वाच्यम्। तावतापि बहुनीवाराणां एकद्विव्रीहिमिश्राणां ग्रहणप्रसंगात्, जातिव्यक्तितदवयवानां सर्वेषामनुग्रहात्।

नन्वेवं व्यक्तिभिरश्वशफपरिमाणं न सम्पादितमिति चेत्। सत्यम्। तावतावयवपर्यनात्वाभ्युपगन्तॄणामश्वशफपरिमाणस्य शास्त्रार्थीभूतद्रव्यद्वारैव

सम्पादनीयस्यावयवैः सम्पादनेऽपि वैगुण्याभावेन व्यक्तिभूयस्त्वे पक्षपातायोगात्।

तस्मात् व्रीहिसत्त्वे तैरेव पुरोडाशसम्पादनव्यवस्थासिध्यर्थं व्यक्तिरेव शास्त्रार्थं इत्यङ्गीकर्तव्यम्। तथा सति परिमाणस्य शास्त्रार्थीभूतव्यक्तिद्वारैव यागाङ्गत्वात्, अशास्त्रार्थावयवद्वारा यागसम्बन्धे वैगुण्यं मा भूदिति नः नीवारोपादानमिति सिध्यति।

नन्वेवमवयवानामशास्त्रार्थत्वे मुख्यालाभस्थले विसदृशस्याप्युपादानं स्यात्। ईषच्छास्त्रार्थानुग्रहसौकर्यरूपविशेषस्य सदृशोपादानेऽप्यभावादिति चेत्। न। आरब्धप्रधानस्यावश्यसमापनायानियतयत्किञ्चिद्द्रव्योपादाने प्रसक्ते सादृश्यरूपविशेषप्रत्यासत्त्या नीवारादीनां झटित्युपस्थितौ तदतिक्रमणकारणाभावाद्व्यवस्थोपपत्तेः। तस्मान्नीवारादिगतावयवानामपूर्वीयत्वस्य व्रीहिशास्त्रादनवगतत्वात्तत्साधारणलक्षणायोगात् फलचमसवत्तत्रापि धर्माणामतिदेशत एव प्राप्तिस्स्यादिति वज्रलेपायते।

एवमपूर्वीयत्वलक्षणायां "यदाहवनीये जुहोती" त्यादावपि नित्यहोमानामेव द्रागपूर्वीयतयावगतानामाहवनीयान्वयः स्यात्, न तु नैमित्तिकतया पश्चादवगन्तव्यापूर्वसाधनभावानां भेदनहोमादीनामपि।

यत्त्वत्र "यदाहवनीये जुहोती" त्यस्यानारभ्याधीततया तत्तत्प्रकरणपर्यालोचनयाऽपूर्वसाधनतया होमावगतिसमये भेदनहोमादीनामप्यपूर्वसाधनतयावगतिसम्भवेन जुहोति तात्पर्यविषयत्वसम्भवात् भवत्याहवनीयसम्बन्ध इति। तन्न। अनारभ्याधीतमपि ह्येतत्प्रकरणान्तरस्थितमपि यदेव द्रागपूर्वीयतयावगतं तदेव लक्षयेत्, न तु नैमित्तिकतया विलम्बितावगतापूर्वीयताकं भेदनादिहोममपि।

यदि तु नैमित्तिके आहवनीयं प्रापयितुमेव जुहोतिवाक्यं विलम्बते, तदा फलचमसे संस्कारलाभार्थं क्रयादिवाक्यमपि विलम्बेत।

अथ भेदनहोमानां होमत्वमेवाहवनीयाभावे न स्यात्। तेषां दर्वीहोमत्वेनापूर्वतयातिदेशेनापि तल्लाभासम्भवात्। तथा चाहवनीयलाभार्थमेव जुहोतिवाक्यं विलम्बतामिति चेत्। न। आहवनीयाभावेऽपि यत्र क्वचिदधिकरणे होमसम्भवात्, पत्नीसंयाजावभृथपदहोमादिवदाहवनीयाभावेऽपि होमत्वाविरोधात्।

ननु एवं निराहवनीयानामाहवनीयलम्भनाय जुहोतिशास्त्रप्रवृत्त्यनङ्गीकारे तत्रत्यजुहोतिना जुहोत्युत्पत्तिकानामामनहोमादीनामेवानुवादः स्यात्, न तु

आग्नेयादीनामुत्पत्तिवाक्ये जुहोत्युत्पत्तिशून्यानामपि। ततश्च तेषामाहवनीय-सम्बन्धोऽपि न स्यादिति चेत्। नास्त्येवाग्नेयादीनां जुहोतिनानुवादः। याग-होमयोर्भेदात्।

न चैषामाहावनीयाभावः, "चतुरवत्तं जुहोती"ति वाक्यसिद्धहोम-द्वारा तत्सम्भवात्। साक्षादाहवनीयस्तेषां नास्तीति चेत्। मास्त्वेव। एवं च प्रतिनिध्युपादानस्य निमित्तं संयोगेन विधीयमानत्वात् न नैमित्तिकत्वमिति साधनमपास्तम्। उक्तरीत्या व्रीहिशास्त्रस्य व्रीहिशब्दविषयस्य प्रतिनिधेः सामान-विध्यानुपपत्तौ यन्नैमित्तिकत्वनिराकरणस्य निष्फलत्वादशक्यत्वाच्च।

द्विविधं हि नैमित्तिकत्वम्—शाब्दम्, आर्थं च। तत्र सप्तम्याद्यभावात् शाब्द-स्यासम्भवेऽप्यार्थस्य दुर्वारत्वात्। प्रतिनिधेः व्रीहिशास्त्रविषयत्वमङ्गीकुर्वतापि समग्रव्रीह्यलाभे निमित्त एवोपादेयत्वात्। पूतीकानां तु सोमाभावे "पूतीकान-भिषुणुयादि"ति शाब्दमेव नैमित्तिकत्वम्।

न च एकेनैव सोमशास्त्रेण विहितानां सोमजाति-व्यक्ति-तदवयवानां मध्ये एकदेशस्य नित्यत्वम्, एकदेशान्तरस्य नैमित्तिकत्वं च न सम्भवतीति वाच्यम्। बाधकाभावात्। एकशास्त्रविषयत्वस्य प्रतिनिधिष्वनभ्युपगमाच्च। वचनावगतस्य निमित्तत्वस्यान्यत्रादर्शनमात्रेण दुस्त्यजत्वाच्च। न च न वचन-मिदं सोमाभावे निमित्ते पूतीकगतानां सोमावयवानां यागसाधनत्वं विदधाति। तस्य सोमशास्त्रादेवावगतत्वात्। किन्तु सोमशास्त्रान्तर्गतवह्वव्ययवलिप्सया सुसदृशानामेवोपादाने प्राप्ते पूतिकगतावयवोपादाननियमार्थं सत्प्रतिप्रसव-तुल्यं भवति।

न च तथाविधशास्त्रस्य नैमित्तिकत्वमिति वाच्यम्। अस्तु पूतीकगताव-यवानां सोमशास्त्रार्थत्वम्। अथापि तेषां यागसाधनत्वं विदध्यादेवेदं वाक्यम्। एतद्विध्यप्रवृत्तौ सुसदृशानामेव यागार्थत्वापत्त्या पूतीकानां यागार्थत्वाप्रसक्तेः।

यच्च पूतीकनियमार्थमिदं वचनमित्युक्तम्। तदपि न। अत्यन्ताप्राप्ति—विषयत्वेन विधानार्थत्वात्।

किं च वाक्यमिदं विदधातु, नियच्छतु वा, किमनेन विचारेण। सर्वथा निमित्त एव विदधाति, नियच्छति वेति सप्तमीश्रुतिलब्धं सोमाभावस्य निमि-त्तत्वं न कथंचन हीयते। तथा च तथाविधशास्त्रार्थस्य न कथं नैमित्तिकत्वम्।

यत्तु—अस्तु वा प्रतिनिधीनां नैमित्तिकत्वम्। तथापि तेषामपूर्वीयत्वं सोमशास्त्रादेवावयवपर्यन्ताद्व्यक्तिसमकालमगवतम्, न तु नैमित्तिकशास्त्रा-देवावगमयितव्यमिति संस्कारवाक्यस्थव्रीह्यादिपदलक्षत्वसम्भवात् प्रतिनिधि-

सामानविध्यम्। नैमित्तिकानान्तु सोमशास्त्राविषयत्वादसामानविध्यं च व्यवस्थितमिति मीमांसकमर्यादा निर्मर्यादं प्रवर्तत इति न किंचिदनुपपन्नमिति। तत्तुच्छम्। सोमादिपदानामवयवपर्यन्तत्वाभावात्। तथात्वे व्रीहिमिश्रनीवारोपादानप्रसंगस्य चोक्तत्वात्। अवगतस्यैव लक्ष्यत्वमिति नियमाभावस्य तथात्वे सोमादिष्वप्यतिदेशापत्त्यादेश्च दर्शितत्वात्, व्रीह्यादिसंस्कारविधिषु व्रीह्यादिशास्त्रसमकालप्रवृत्तिकेऽपूर्वीयत्वस्य प्रागनवगत्या लक्षणाया असम्भवात्। सम्भवमात्रेऽपि प्रमाणाभावाच्चापूर्वीयलक्षणाया एवाभावे फलचमसप्रतिबन्दिमात्रोद्धारेऽपि यवसाधारण्यस्य शशशृंगायमाणत्वात्, प्रतिनिधिनैमित्तिकयोस्तुल्यस्थितिकत्वव्यवस्थापनान्नारिष्टहोमादीनामाहवनीयशास्त्रविषयत्वसिद्धान्तभञ्जनादेश्च कथं मीमांसकमर्यादानिर्मर्यादं प्रवर्तत इति विभावनीयं विद्वद्भिः।

किंच क्रियाप्रतिनिधौ धर्मसामानविध्यस्य कथमप्यनुपपादनात् "व्रीहीनवहन्ती"त्यादौ अवहन्तेरवयवपर्यन्तत्वस्य दुर्वचत्वात्, क्रियाया निरवयवत्वात्। तस्मान्न किञ्चिदनुपपन्नमित्यस्य किञ्चिन्नानुपपन्नम्, किंतु सर्वमेवानुपपन्नमित्यर्थो द्रष्टव्यः।

नन्वेवं प्रतिनिधिसामानविध्यसिद्धान्तो भज्यत इति चेत्। पूर्वपक्षदशायामिष्टत्वात्। अभ्युपेत्य तु ब्रूमः—अवघातादयः संस्काराः प्रतिनिधिसाधारणा एव, "व्रीहीनवहन्तो"त्यादौ व्रीह्यादिशब्दानामवयपर्यन्तत्वात्। यद्यपि तत्र द्वितीयाश्रुतिप्रतिपन्नसंस्कार्यत्वस्य वाच्यार्थजातावसम्भवेन तत्साक्षात्सम्बन्धिव्यक्तिमात्रमाक्षेप्यम्। तथापि मुख्यालाभे अवश्यसमापनीस्य प्रधानस्यार्थेन सादृश्यात् झटित्युपस्थितनीवारगतावयवेषु प्रतिनिधीयमानेषु संस्काराकाङ्क्षिषु सत्सु तदनुग्रहाय संस्कारवाक्यस्थव्रीह्यादिशब्दानां तद्वाच्यजातिपरिछेद्यमात्रे लक्षणा स्वीक्रियते।

न चैवं यवफलचमसाद्याकाङ्क्षानुसारात्ततत्साधारण्यपि लक्षणा स्यादिति वाच्यम्। आकाङ्क्षया हि धर्माः प्राप्यन्ते। तत्र प्रसिद्धसम्बन्धसत्वे प्रतिनिधिषु लक्षणया, तदभावे फलचमसादिष्वतिदेशेन धर्माः स्युरिति। अत्राहुः—"व्रीहिभिर्यजेते"त्यत्र व्रीहिशब्दस्यावयवपर्यन्तत्वं दीक्षितमतमेव नास्ति। तथा च मुख्यालाभे यस्य कस्यापि द्रव्यस्य प्रतिनिधेयत्वेन व्रीहिसदृशनीवारगतावयवानामनुपादेयत्वेन तेषामपूर्वीयत्वज्ञानाभावे धर्माकाङ्क्षाया एवाभावात् का प्रसक्तिस्तत्साधारणलक्षणाश्रयणस्येति। तदसारम्। मुख्यालाभस्थले तदवयवस्यैव प्रत्या-

सत्तिविशेषात् झटित्युपस्थितस्यैव प्रतिनिधेयत्वेऽपूर्वीयत्वज्ञानसम्भवेन तदाकांक्षाया लक्षणौचित्यात् ।

न च व्रीहिशास्त्र एव व्रीहिपदमवयवपर्यन्तमस्तु तावतापि प्रतिनिधिसामानविध्यसम्भवादिति वाच्यम् । एवं ह्यपूर्वीयलक्षणया सामानविध्यादिष्टसिद्धिं मन्यसे । तदयुक्तम् । व्रीहिशास्त्रस्यावयवपर्यन्तत्वे व्रीहिमिश्रनीवारोपादानापत्तेः, व्रीहिसमवधानेऽप्युक्तत्वात् । उद्देश्यसमर्पकपद इव विधेयसमर्पकपदे लक्षणाया अन्याय्यात्वाच्च । वृत्तिमात्रलक्षणा तु निरूढत्वाद्विधावपि न दोषः ।

ननु व्रीहिशास्त्रेऽवयवपर्यन्तत्वमावश्यकम् । अन्यथा प्रतिनिधेः शास्त्रीयत्वाभावे मुख्यालाभस्थले शास्त्रार्थं यथाशक्ति सम्पादयामीति सङ्कल्पयितुमशक्यतया "नीवारगतावयवैर्यक्ष्ये" इत्येव सङ्कल्पनीयम् । एवं च प्रवृत्तस्य निर्वापात्पूर्वं मुख्यलाभेऽपि मुख्योपादाने नीवारत्यागान्मिथ्यासङ्कल्पभीत्या नीवाराणामेवोपादानं स्यात् । अवयवपर्यन्तत्वे त्ववयवानां शास्त्रीयत्वात् "शास्त्रार्थत्वं सम्पादयामी"ति संकल्पसम्भवात्, मुख्यग्रहणसम्भव इति चेत् । न । उक्तबाधकेन व्रीहिशास्त्रस्यावयवपर्यन्तत्वाभावे न्यायागतस्य मुख्यमनादृत्य प्रतिनिध्युपादानस्य सह्यत्वात् । किञ्च "मुख्याभावे शास्त्रार्थमुपाददे" इति प्रतिनिधिं नोपादत्ते । किन्तु व्रीहिशास्त्रमनुपसंहरन्नपि "प्रधानशास्त्रार्थमात्रमुपसंहरामीति" । ततश्चास्मिन्मतेऽपि "शास्त्रार्थं सम्पादयामीति" संकल्पयति, न तु नीवारस्वरूपमुपाददे" इति । ततश्च मिथ्यासङ्कल्पत्वान्मुख्योपादानसिद्धान्तस्य न हानिः ।

नन्वेवं नीवारगतावयवाकांक्षायावघातशास्त्र एव लक्षणा स्यात्, न प्रोक्षणशास्त्रेऽपि, तेषां प्रोक्षणाकाङ्क्षायां मानाभावादिति चेत् । न । नेवारैरपूर्वे कर्तव्ये सामान्यत एव प्रकाराकाङ्क्षा भवति । विकृतिस्थलवत् । तत्र सजातीयैर्दृष्टाः सर्व एव धर्माः प्राप्यन्ते । तत्रेयानेव विशेषः—यत् विकृतिषु प्रसिद्धसम्बन्धाभावादतिदेशेन, प्रतिनिधिषु तु तत्सत्त्वाल्लक्षणयेति ।

अथ प्रधानविधिनाऽऽक्षिप्यमाणः प्रतिनिधिः पिष्टावस्थायां व्याक्षिप्येत । ततश्चावघातादेरप्यनाकाङ्क्षितत्वात् तत्सामानविध्यं न स्यादिति चेत् । न । न हि प्रधानविधिमुपलभ्यैव प्रतिनिधिमुपादत्ते । किन्तु व्रीहिशास्त्रमालोच्य, तदर्थस्यासम्भवे । तथा च व्रीहिभिः सतुषैः, सतुषा एव व्रीह्यवयवा नीवारगता उपस्थाप्यन्त इति, तदतिक्रम्यानुपस्थितपिष्टाद्युपादाने का प्रसक्तिः ? येन अवघातादिर्न काङ्क्ष्यते ।

किं च प्रधानविधिमात्रेणोपादानाङ्गीकारेऽपि तस्योभयथाप्युपपन्नस्य प्राकरणिकबहुपदार्थोपादापकतया स्तुषावस्थनीवारसत्त्वे तदुपादापकत्वौचित्यात् । तदभावे तु कामं पिष्टमप्युपादापयेदेव ।

न चैवं धर्मालोपार्थमेव यवसाधारणी लक्षणा स्यादिति वाच्यम् । प्रसिद्ध-सम्बन्धस्यानुक्तत्वात् । अप्रसिद्धसम्बन्धेन कथंचिल्लक्षणायां "व्रीहीणां मेध सुमनस्यमान" इति मन्त्रस्य यवपुरोडाशप्रतिष्ठापनेऽपि प्रवृत्त्यापत्तेर्मूल एव स्फुटीकृतत्वात् ।

एतेनानुकल्पस्य प्रतिनिधेर्धर्माकाङ्क्षया लक्ष्यत्वम्, तथात्वेऽपि यवानां तु मुख्यानामेव सतामलक्ष्यत्वमित्यतिसाहसमित्यतिसाहसमिति व्यक्तमेव ।

असाहसिकेन सता प्रसिध्यप्रसिद्धिभ्यां सम्बन्धवैलक्षण्यमप्रसिद्धग्रहेण यवतरसमयपुरोडाशविषये 'तस्मिन् सीद, धान्यमसि' इति मन्त्रयोरनूहेन प्रवृत्तिं चापादितामवधीरयितुमशक्यत्वात् ।

न चैवं 'अग्निर्वै ब्राह्मणः' इत्यत्राप्रसिद्धसम्बन्धेन प्रजापतिमुखजातत्वे-नाग्निशब्दो ब्राह्मणे न वर्तेतेति वाच्यम् । अग्नि-ब्राह्मणसामानाधिकरण्यबलात्त-दंगीकारात् ।

न चैवं सामानाधिकरण्याभावान्नीवारेष्वपि लक्षणा न स्यादिति वाच्यम् । न हि सामानाधिकरण्यमेकमेव लक्षणाबीजम् । प्रसिद्धसम्बन्धसहकृ-तधर्माकाङ्क्षया अपि तद्बीजत्वात् । केवलधर्माकाङ्क्षायास्तद्धेतुत्वेऽतिप्रसङ्गस्य दर्शितत्वात् । यवफलचमसयोस्तु धर्माकाङ्क्षमात्रं न लक्षणातन्त्रमिति ।

ननु तरसपुरोडाशे धान्यशब्दस्य लक्षणया प्रवृत्त्यभावो न, प्रसिद्धसं-बन्धाभावात् किन्तु अनुष्ठेयार्थप्रकाशनाय प्रयुज्यमानस्य तस्य प्रकृतावध्ययन-सिद्धपदत्यागायोगादर्थाल्लक्षणाश्रयणेऽपि विकृतौ 'स्वायत्ते शब्दप्रयोगे नात्रा चकं प्रयोक्तव्य.मे'ति न्यायेन मांसमसीत्यूहितव्यत्वादिति चेत् । न ।

ऊहोऽपि ह्यनुष्ठेयार्थप्रकाशनायैव । तद्यध्ययनसिद्धरूपापरित्यागेना-प्रसिद्धसम्बन्धेनापि लक्षणाङ्गीकर्तुस्तव सिध्येत्, तदा धान्यशब्दो लक्षणयैव प्रकृतिवत्प्रयोक्तव्यो, न तु "मांसमि"त्यूहितव्यः ।

किंच एवं काप्यूहो न स्यात् । सर्वत्र लक्षणासम्भवात्, अध्ययनसिद्धपा-ठबाधाच्च मन्त्रैरेव मन्त्रार्थस्मरणनियमानुग्रहाच्च । ऊहस्यामन्त्रत्वात् । तस्मात् प्रसिद्धसम्बन्धाभावादेव तरसमय इति नोह एष्टव्यम् ।

किञ्चैवमप्रसिद्धसम्बन्धेन शब्दप्रवृत्त्यंगीकारे 'देवस्य त्वे' त्यादिनिर्वाप-मन्त्रे देवसवित्रादिशब्दानां समवेताभिधायित्वाय यजमानादिपरत्वे प्रकृतौ निश्चिते सत्रादिषु यजमानबहुत्वादिप्रकाशनाय "देवानां त्वा सवितॄणां प्रसव" इत्यादि क्रमेण ऊहः स्यात्। न चात्र यज्ञपतिवृद्धिवत् परार्थत्वं यजमानानुज्ञायाः परकीयद्रव्यविषये व्यलीकादिपरिहारार्थत्वेन दृष्टार्थत्वात्। "उदीचीनां अस्य पदोनिधत्तादि" त्यत्रैव ऊहस्यावश्यकत्वात्।

न चैवं नीवारचर्वादौ धान्यशब्दस्य तण्डुलेषु प्रसिद्धसम्बन्धसत्त्वात् लक्षणया प्रयोगः स्यादिति वाच्यम्। अयं हि अधिवापमन्त्रः, अधिवापश्च चूर्णीकरणार्थः। चूर्णीकरणं चेच्चरावार्थलोपान्निवर्तते। तत्राधिवापस्यैवाभावे का प्रसक्तिस्तदर्थमन्त्रस्य यत्र लक्षणोपादानम्।

यदि तु चरुपदं प्रामादिकम्, नैवारः पुरोडाशोऽस्ति। तत्रेदमापादनमिति। तदा इष्टापत्तिरित्येवोत्तरम्। एवन्तु शङ्कितव्यमप्रसिद्धसम्बन्धसत्त्वान्मुख्य-नीवारेष्वपि प्रतिनिधिनीवारेष्विव "व्रीहीणामिति" मन्त्रस्यानूहेन न प्रवृत्तिः स्यादिति। तत्र नीवारगतावयवेष्ववयवी व्रीहिवाचिनः व्रीहिशब्दस्य प्रसिद्ध-सम्बन्धसत्त्वेऽपि न नीवारजातिव्यक्त्योरस्ति। ते एव च प्रकाश्ये इति तदर्थमूहः आवश्यक एवेति परिहर्तव्यम्।

अपि चैवमप्रसिद्धसम्बन्धलक्षणायां "अग्नये जुष्टमि"त्यत्र निष्ठाप्रत्य-यस्य समवेताभिधायित्वाय भविष्यदर्थलक्षणया प्रकृतौ प्रयोगे "विकृतिषु स्वायत्त" इति न्यायेन भविष्यदर्थशक्तप्रत्ययशिरस्कतया ऊहापत्तिः।

अपि "चासंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत" [ ९-१-४२ ] इत्यधिकरणमप्युच्छिद्येत। तत्रापि "पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी" इत्यादि-वाक्यशेषस्य स्तुतिपरतया तदर्थहरिसद्भावानिश्चयेऽपि इन्द्रस्य यदीन्द्रत्वम्, यद्वा त्यज्यमानहविर्विशेषोद्देश्यत्वमेवमादिधर्माणामवश्याभ्युपेयानां सुब्रह्मण्यानि-गदस्थहरिवदादिशब्दैर्यथाकथंचिदप्रसिद्धसम्बन्धमादाय लक्ष्यत्वसम्भवेन प्रकृतौ समवेताभिधायित्वे अग्निष्टुति अतिदिष्टे सुब्रह्मण्यानिगदे "आग्नेयी सुब्रह्मण्या कार्ये"ति वचनादिन्द्रपदस्थानेऽग्निपदे निक्षिप्ते "स्वायत्ते शब्दप्रयोगे" इति न्यायेन हरिवदादिपदस्थाने अग्निवदादिशब्दानामूहः स्यात्। तथा च हरिव-दादिपदानां तत्राप्यनूहेन प्रवृत्तिरिति तत्सिद्धान्तभङ्गात्।

किंच एकहायनीक्रयमन्त्रः "तस्यै दधी" त्यादिः। तत्र दधिशृतशब्दौ एकहायन्यवस्थायामसम्भवदर्थकत्वांदसमेतवचनाद्दृष्टार्थौ विकृतौ साद्यस्के "त्रिवत्ससस्साण्डस्सोमक्रयण" इति श्रुतिवत् स नोहितव्यौ इत्यपि सिद्धान्तो

भज्येत। एकहायन्यां विद्यमानयोः पिङ्गाक्षीत्वैकहायनीत्वयोरप्रसिद्धसम्बन्धेन लक्षणया दधिश्रृतशब्दाभ्यां प्रतिपादनेत्रिवत्सेन "स्वायत्ते" इति न्यायेन तस्य त्रिहायनत्वम्, तस्य श्वेताक्षत्वमित्यादिक्रमेण ऊहापत्तेः।

यत्त्वत्र त्रिवत्से शकृन्मूत्रयोः सांसिद्धिकद्रवत्वेन परस्परावयवानुस्यूतेः सत्त्वात् प्रसिद्धसम्बन्धस्य लक्षणाप्रयोजकस्य सत्त्वात् दधि-श्रृतपदयोः पूर्वपक्षेऽप्यविकारेण लक्षणया प्रयोगोपपत्त्या ऊहाप्रसक्तौ तन्निराकरणार्थमधिकरणं व्यर्थं स्यादित्यापादितम्। तदसारम्। न हि दधि-श्रृतयोः शकृन्मूत्रयोश्च परस्परावयवानुस्यूतिरस्ति। सादृश्यस्य सर्वलोकानुभवविरुद्धत्वात्। यथाकथंचित्सादृश्यमात्रस्य वस्त्वन्तरविनिगमनाप्रयोजकस्यानाशङ्कनीयत्वात्। अन्यथा कदाचिद्दधिश्रृतापचारे शकृन्मूत्रयोः पिष्टक्षोदजलादिवत् क्वचित्प्रतिनिधेयत्वापत्तेः।

किं चात्र लक्षणामप्यनपेक्ष्य मुख्यवृत्त्यैव दधि-श्रृतशब्दाभ्यां भाविनोर्दधिश्रृतयोरेव प्रकाशनमिति, 'तदभावात् त्रिवत्स ऊहः स्यादि'ति पूर्वपक्षस्यावश्यनिरसनीयत्वात्। तस्मात् स्वाभ्युपगमविरुद्धमिदमधिकरणमस्मद्विरुद्धमिति कथं लिखितमिति चिन्त्यम्।

अथैवमध्ययनसिद्धपाठाविघाताय मन्त्रत्वसिद्धये चानूहेन लक्षणया प्रयोगात् 'अदितिः पाशान्'ति वहुवचनान्तमन्त्रो द्विपशुकासु "मैत्रं श्वेतमालभेत, वारुणं कृष्णमि"त्यादिविकृतिषु नोह्यतेति चेत्। न। तत्र किं 'स्वायत्ते शब्दप्रयोगे' इति न्यायेनोहो, न, किन्तु द्वित्वे छन्दस्यपि वहुवचनस्यायुक्तत्वात्। वस्तुतस्तु पाशद्वयस्याप्येकेनाध्वर्युणा क्रमेण मोचनीयत्वात् मन्त्रस्याभ्यासः एव न्याय्यः, नोह इति चिन्त्यमेतत्।

यत्तु व्रीह्यादिशब्दानां सर्वत्रावयवपर्यन्तत्वमवश्यं वाच्यम्। अन्यथा "व्रीहीणां मेध सुमनस्यमान" इति मन्त्रस्य नीवारद्रव्येऽनूहेन प्रवृत्तिरिति, प्रतिनिधौ चाधिकारादिति नावमिकाधिकरणं भज्येत। ऐन्द्रीमन्त्रस्य 'ऐन्द्र्या गार्हपत्यमि'ति वचनवलाल्लक्षणाङ्गीकारोऽपि वचनाभावे मन्त्रपदानां लक्षणाया अयोगे नीवारस्वरूपस्य चाप्रकाश्यत्वेनोहस्याप्ययोगे निवृत्तेरेव प्राप्तेः। अवयवपर्यन्तत्वे तु मुख्यस्थलवन्मन्त्रः प्रवर्ततैवेति। तदपि न। न हि मन्त्रपदानां न लक्षणेति नियमः। आकृतिवादे व्यक्तेरपि लक्षणीयतया व्रीह्यादिपदाविषयत्वापत्तेः। किन्तु यत्रानुष्ठानायावश्यप्रकाश्येऽर्थे मन्त्रपदानां प्रसिद्धसम्बन्धः परिच्छेद्यपरिच्छेदकभावादिः; तत्र लक्षणां विनापि वचनं व्यक्तिवदवयविन्यऽपि

स्यादेव। यत्र तु न तादृशः सम्बन्धः, तत्रैव लक्षणायां वचनापेक्षा। यथैन्द्राग्नादाविति। तस्मात् संस्कारवाक्यस्थपदानमापूर्वीयत्वलक्षणाभाव एव कथंचिन्मीमांसकमर्यादया प्रतिनिधिनैमित्तिकयोः सामानविध्यासामानविध्यव्यवस्थोपपादयितुं न शक्येति निरवद्यमुक्तम्। क्रियाप्रतिनिधौ धर्मसामानविध्यायोगस्तु पूर्वपक्षिणो नातिदोषायेति ध्वनयितुमत्र कथंचिदित्युक्तमिति द्रष्टव्यम्।

अपि च प्रोक्षणादेः संस्कारवाक्याधिकारवाक्ययोरेकवाक्यतादशायामपूर्वार्थतावगत्यनपेक्षायामपि द्वितीयाश्रुतिनिर्दिष्टव्रीहिगुणतया विधीयमानस्य भूतभाव्युपयोगविधुरव्रीहिविषयत्वमनुपपद्यमानं व्रीहीणामपूर्वीयत्वं गमयति। यथा पुनराधानस्याग्निद्वयोत्पादनसमर्थस्यैकमात्राग्न्यनुगमे निमित्ते विधानयोग्यं सदग्निद्वयानुगतिमेव निमित्तं कल्पयति।

न च "अग्नीनादधीते"ति वचनादग्निद्वयोत्पादनसमर्थस्यैवाधानस्य निमित्तविधानमिति "यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः" इत्यत्र पुनःश्रुत्या निश्चयादस्तु पुनराधानस्याग्निद्वयानुगतिनिमित्तकत्वम्, प्रोक्षणादेरपूर्वीयव्रीहिविषयत्वानिश्चयात् कथं तद्विषयव्रीहीणामपूर्वीयत्वनिश्चय इति वाच्यम्। प्रोक्षणादिकं हि 'व्रीहीनि'ति द्वितीयाश्रुत्या तत्संस्कार इति निश्चीयत एव। तच्च संस्कार्ये भूतोपयोगस्यानाशङ्कनीयत्वात् भाव्युपयोगित्वं कथं न कल्पयेत्, तेन विनानुपपद्यमानत्वात्। तस्मान्निश्चितया संस्कारकर्मत्वान्यथानुपपत्त्या व्रीहीणामपूर्वीयत्वलाभसम्भवे संस्कारकर्मणि अपूर्वीयव्रीहिसंस्कारकर्मानवगत्युद्घाटनं प्रकृतानुपयुक्तमिति द्रष्टव्यम्। अन्यथा पुनराधानेऽपि अग्निद्वयानुगतिनिमित्तकाधानस्यानिश्चयात् नाग्निद्वयानुगतिनिमित्तताकल्पकत्वमिति स्यात्, कल्प्यघटितोपपादकानवगतेस्तुल्यत्वात्।

किञ्चापूर्वीयलक्षणायां "रथन्तरे प्रस्तूयमाने सम्मीलयेत्, बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेत्" इत्यत्र रथन्तरबृहतोर्विहितं मीलनादिकं बृहद्रथन्तरयोरपि स्यात्।

न च तयोर्वाक्ययोः "रथन्तरे" इति "बृहती"ति च निर्देशभेदार्थमव्यवस्था स्यादिति वाच्यम्। तत्र निर्देशभेदनिर्वाहार्थं पृष्ठस्तुत्यपूर्वीयरथन्तरे प्रस्तूयमाने सम्मीलयेदित्यर्थस्वीकारे विशिष्टोद्देशकृतवाक्यभेदापत्तेः।

अथास्तु वाक्यभेदः, वरं स निर्देशानर्थक्यादिति चेत्। मैवम्। अस्मदुक्तरीत्या श्रुत्यैव धर्मव्यवस्थासिद्धौ अपूर्वीयलक्षणामङ्गीकृत्य, विशिष्टोद्देशं वाक्यभेदं चाङ्गीकर्तुमयुक्तत्वात्।

किं चैवं "यस्योभयं हविरार्तिमार्च्छेत्यैन्द्रं पञ्चशरावमि"त्यत्रापि उभयार्तिनिर्देशात्तदर्थं तद्विशिष्टोद्देशवाक्यभेदयोः स्वीकारापत्तिः।

अपि चास्तु वाक्यभेदः। तथापि प्रत्युद्देश्यं वाक्यपरिसमाप्तेर्विधेयस्य सम्मीलनादेरपूर्वीयार्थत्वम्, रथन्तरार्थत्वं च स्यात्। तत्रापूर्वीयार्थत्वांशमादाय सांकर्यतादवस्थ्यम्।

अथैवमुच्यते—अपूर्वीयं मीलनेन भावयेत्। तच्च रथन्तरमिति। तथा च मीलनस्यारथान्तरात्परिसंख्यानात् न भविष्यति सङ्कर इति। तदयुक्तम्। ग्रहैकत्वाधिकरणविरोधापत्तेः। तत्रापि एकवचननिर्देशरक्षार्थं विशिष्टोद्देशं वाक्यभेदं च सोढ्वा 'ग्रहं सन्मृज्यात्, यं सम्मृज्यात्तं चैकमि'ति वचनव्यक्तेदर्शयितुं शक्यत्वात्।

यदि च वदेदेकं रक्षितुं वाक्यभेदस्वीकारो न युक्त इति मतम्। तदा प्रकृतेऽपि तुल्यम्।

ननु विशिष्टोद्देशे वाक्यभेदो नास्तीति त्वया स्वीकृतम्। तद्रीत्या प्रकृतं साधयाम इति चेत्। मैवम्। मया हि उपात्तस्य भूयः कीदृगित्याकांक्षाविरहान्न विशेषणसम्भव इत्युक्तम्। तथा च रथन्तरस्य पृष्ठसाधनत्वेनोपात्तस्यापूर्वीयत्व-विशेषणासहिष्णुत्वात् विशिष्टोद्देश एव न सम्भवति। येन प्रकृतसिद्धिः। कथं तर्हि "व्रीहीणां मेध सुमनस्यमान" इत्यत्र लिङ्गकल्पिते "अनेन मन्त्रेण व्रीहि-पुरोडाशप्रतिष्ठापनं कुर्यादि"ति वाक्ये विशिष्टोद्देशस्वीकार इति चेत्। न। लिङ्ग-बलाद्विशिष्टस्य उद्देश्यत्वे निश्चिते, तदनुसारेण कल्पनस्यादोषत्वात्। पठ्यमान-वाक्ये हि एकत्वे सम्भवति भेदो न न्याय्य इति रीतिर्मध्यमादिवाक्ये परम-सिद्धान्तिभिरभ्युपगमेऽपि वाक्यभेदो दोषः।

एवं तथैवाक्षेपाक्षेप उद्घाटितं च। तस्मान्मीलनसाङ्कर्यमपूर्वीयलक्षणायां स्यादेव।

अपि चापूर्वीयरथन्तरार्थत्वे धर्माणां समुच्चित्य, प्राप्तेरभ्युपगमात् "उच्चैर्गेयम्, नोच्चैर्गेयमि"ति बृहद्रथन्तरधर्माणां मिथो विरोधादेकत्र कण्वरथन्तरादौ समु-च्चयो न युक्त इति भाष्यं प्रतिक्षिपतापि वार्तिककृता तद्धर्माणां तत्र विकल्पा-भ्युपगमाच्च। हन्तैवं प्रकृतावपि विरोधादेव धर्माणां व्यवस्था स्यादिति वाच्यम्। मीलनादिविधिषु रथन्तरादिपदानां श्रुतिवृत्तत्वे हि व्यवस्था सिद्ध्येत्। लक्षणा-पक्षे तदयोगात्। पृष्ठस्तुत्यपूर्वसाधनत्वावच्छेदेन मीलनादिविरुद्धधर्मविधौ तत्र ग्रहणाग्रहणवद्विकल्पस्यैव प्राप्तेः।

ननु श्रुतिपक्षेऽपि धर्मसाङ्कर्यसाम्याल्लक्षणाभ्युपगम्यत इति चेत्। न। श्रुतिपक्षे रथन्तरोद्देशेन विहितधर्माणां बृहति प्राप्तौ प्रसक्तेरेवाभावात् तुल्यत्वेऽपि दोषस्य श्रुतिमुज्झित्वा लक्षणाङ्गीकारस्य स्वतन्त्रपुरुषमात्रकर्तव्यत्वात्।

अथ रथन्तरेण शूरत्वादिप्रकारिका श्रुतिर्निर्वर्त्यते। बृहता तु चित्रत्वादिप्रकारिका। "अभित्वा शूर नो नुमः, सत्वन्नश्चित्र वज्रहस्ते"ति, तदृचोर्भेदात्। तथा च स्तुतिप्रकारभेदात् न धर्मसङ्कर इति चेत्। न। शूरत्वादिप्रकारकपृष्ठस्तुत्यपूर्वसाधनार्था वा मीलनादयः, उत चित्रत्वादिप्रकारकान्यपृष्ठस्तुतिसाधनार्था वा।

नाद्यः—रथन्तरत्वविवक्षापक्ष इव शूरत्वप्रकारकत्वविवक्षापत्तेऽपि कण्वरथन्तरादिषु अतिदेशासम्भवतादवस्थ्यात्, विशिष्टोद्देशापत्तेश्च।

किं च रथन्तरस्यापूर्वसाधनत्वं "रथन्तरं पृष्ठं भवती"ति वाक्यादवगम्यते। शूरत्वादिप्रकारकस्तुतिविशेषसाधनत्वं तु साम्न ऋक्सम्बन्धं ऋचो लिङ्गविशेषं चावगम्यावगम्यते। तथा चानर्थक्यपरिहारायापूर्वीयलक्षणामिच्छतापि प्रथमोपस्थितपृष्ठस्तुत्यपूर्वसाधनत्वमात्र एव लक्षणाया अङ्गीकर्तुमुचितत्वात्। विलम्बितोपस्थितचित्रत्वादिप्रकारकग्रहणे कारणाभावात् धर्मव्यवस्थार्थं झटित्युपस्थितग्रहणस्य सुतरामुचितत्वात्। स्वेच्छया विलम्बितोपस्थितिकग्रहणे फलचमससाधारण्यार्थं विलम्बितोपस्थितिके तत्साधारणापूर्वीयत्वे लक्षणाश्रयणप्रसङ्गात्।

न द्वितीयः—अभावगर्भत्वेन गुरुणोऽत्यन्तानुपस्थितस्य च चित्रत्वादिप्रकारिकान्यत्वस्य लक्ष्यकोट्यनुप्रवेशकल्पने मानाभावात्।

एवं व्रीह्यादिपदेष्वपि यवान्यहविःप्रकृतिलक्षणापत्तौ प्रोक्षणादेर्यवसाधारण्यं साधु समर्थितम्।

एतेन एकपदेनोद्देशान्न विशिष्टानुवाद इत्यपास्तम्। उक्तरीत्या विशेषणस्यानुपस्थितत्वात्, व्रीह्यादिष्वपि एवं लक्षणापत्तेश्च। लक्षणयैकपदेनोद्देशे दोषाभावे एकत्वविशिष्टग्रहलक्षणापत्तौ ग्रहैकत्वाधिकरणभङ्गापत्तेश्च। अत एव "यदग्नये चे"ति वाक्ये एकेन जुहोतिना सायङ्कालीनहोमानुवाद इत्यपास्तम्। तत्तु वाक्यं मन्त्रवर्णप्राप्ताग्निसूर्यानुवादेन प्रजापतिविधायकमित्युक्तमेव।

न च तत्र होमे प्रजापतिविधिरेव न युक्तः। मान्त्रवर्णिकाग्न्यादिदेवतासम्बन्धेन होमस्य देवतान्तरनिराकाङ्क्षत्वादिति वाच्यम्। वचनबलात् देवतान्तरविधौ बाधकाभावात्। प्राकृतधर्मनिराकाङ्क्षायां विकृतौ वैकृतधर्मविधीनां बहुलमुपलंभात् वाचनिकप्रजापत्यपेक्षया मान्त्रवर्णिकाग्न्यादेः प्रथमं होमान्वये मानाभावाच्च। येन देवतान्तरनैराकाङ्क्ष्यमाशंक्येतापि।

'सौर्यं चरुं निर्वपेदि'त्यादौ निर्वापादेरिव पश्चादपि सम्भवत्प्राप्तित्वमात्रेणाग्न्यादेरनुवादः सम्भवत्येव।

किं च विराट्सम्पत्तिवाक्यावगताभ्यासानां प्रत्येकं देवतापेक्षायामग्न्यनवच्छिन्नाभ्यासे देवतान्तरनिवेशे, न किंचिद्बाधकम्।

यत्तु नात्र प्रजापतिमात्रविधानम्। अग्नेरनुवादासम्भवात्। मन्त्रवर्णात् ज्योतिर्गुणकस्यैवाग्नेर्देवतात्वप्राप्तेरिति। तन्न। मन्त्रेऽग्नेर्विशेषणश्रवणेऽपि वाक्यान्तरे विशेष्यमात्रानुवादे बाधकाभावात्। अन्यथा "त्रिर्देवः पृथिवीमेष एताम्, विचक्रमे शतर्चसं महित्वा, प्रविष्णुरस्तु तवसस्तवीयान्, त्वेष ह्यस्य स्थविरस्य नाम" इति वैष्णवयाज्यमन्त्रे देवत्वादिविशेषणश्रवणेऽपि "विष्णुरुपांशु यष्टव्योऽजामित्वाये"ति वाक्ये मान्त्रवर्णिकदेवतानुवादत्वाङ्गीकारो विरुद्ध्येत।

यत्त्वत्राग्निप्रजापत्याश्रितैकदेवताकारकं विधेयमिति। तत्तुच्छम्। व्यासक्तकारकाधिष्ठानप्रकाशकमन्त्रस्यानुपलम्भात् क्वाप्यभ्यासेऽग्नीषोमादिवदग्निप्रजापत्योरयजनाच्च। एकैकाभ्यासैकैकाधिष्ठाननिष्कर्षेण यजनेऽपि सापेक्षदेवतात्वाविरोधे सापेक्ष-निरपेक्षदेवताविभागवैफल्यप्रसंगाच्च। "अग्नि-प्रजापतिभ्यां जुहोमी"ति वचनादर्शनाच्च। "यदग्नये च प्रजापतये च जुहोती"ति प्रत्यधिष्ठानं देवताविभक्तिश्रवणविरोधाच्च।

न चैवं विभक्त्यनुसारात् देवताद्वित्वे होमानुवादेनानेकगुणविधानाद्वाक्यं भिद्येतेति वाच्यम्, अग्नेरनुवाद्यत्वस्योक्तत्वात्।

अत्र चतुर्थी सम्प्रदाने शक्ता। संप्रदानत्वं च द्रव्योद्देश्यत्वे सति द्रव्यप्रतिग्रहीतृत्वम्। न त्वेतदेव देवतात्वम्, तस्याः प्रतिग्रहीतृत्वायोगात्। तथा च चतुर्थ्या स्वार्थैकदेशद्रव्योद्देश्यत्वं लक्षयन्त्या कल्पनीयम्। तच्च कल्प्यमानमेकमेव कल्प्यते, कल्पनाया लाघवपक्षपातित्वात्। तथा च द्वाभ्यामपि चतुर्थीभ्यामग्निप्रजापत्युभयव्यासक्तमेकमेव देवताकारकं' कल्प्यत इत्यायाति। यद्वा लक्ष्यतां वा चतुर्थ्या देवतात्वम्। तथापि वाक्यभेदपरिहारार्थमेकमेव तया तल्लक्षणीयम्। वाक्यभेदादिदोषपरिहाराय'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदी' त्यत्रानेकपदैरन्तर्वेदिबहिर्वेद्युपलक्षितप्रदेशविशेषे लक्षणास्वीकारास्य दृष्टत्वादिति चेत्। मैवम्। चतुर्थ्या कल्प्यमानमपि देवतात्वं प्रत्ययानां प्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्तिबलेन प्रकृत्यर्थगतमेव कल्पनीयम्। तथा च द्वाभ्यां चतुर्थीभ्यां स्वस्वप्रकृत्यर्थगतं देवताकारकद्वयं कथं न कल्प्येत। एतादृशस्थले लाघवस्यानवतारात्। अन्यथा चत्वरे, पर्वते च वर्तमानाभ्यां धूमाभ्यां लाघवादेक एव वह्निः कल्प्येत।

न चैकदैव चतुर्थीभ्यां देवताकल्पना, येन लाघवावतारप्रसक्तिरपि। चतुर्थ्योः देवताकल्पने प्रत्येकमेव पर्याप्तत्वात्, यद्वेत्याद्यपि न, अग्नेरनुवाद्यत्वेन वाक्यभेदप्रसक्त्यभावात्।

यत्तु देवताविशिष्टशब्दार्थसमुदायस्यैकस्य विधानात् वाक्यभेदमाशंक्य, एवमपि इदं निर्देशभेदोदाहरणं भवत्येवेति परिहृतम्। तदपि न। प्रजा-

पतिमात्रस्य विधेयत्वसम्भवे विशिष्टविधिगौरवपराहतत्वेन शंकाया एव मन्दत्वात्।

न च एकदेवताकारकविधानेऽपि मिश्र—शुद्धलिङ्गमन्त्राणां मनोता–मन्त्रवल्लक्षणया प्राप्तिः स्यादेवेति वाच्यम्, लक्षणायां लिङ्गविरोधापत्तेः।

किं च एवं हि पूषानुमन्त्रणमन्त्रस्यापि लक्षणयाग्न्यादिप्रकाशकतयाऽनुत्कर्षापत्तेः, पूषाग्न्योस्तेजस्वित्व-दाहकत्वादिसादृश्यस्याबालगोपालमतिप्रसिद्धस्य सत्त्वेन लक्षणासौकर्यसत्त्वात्। प्रत्युताग्नि—सूर्यादिप्रकाशकमन्त्राणां प्रजापति-लक्षणायामेव न प्रसिद्धसादृश्यम्। कथं तर्हि मनोतामन्त्रः प्रकृताविति चेत्। "यद्यप्यन्यदेवत्यः पशुः, तथाप्याग्नेय्येव मनोता कार्ये"ति वचनादिति ब्रूमः। तस्य विकृत्यर्थत्वमभ्युपगतमिति चेत्। सत्यम्। वचनमन्तरेणाप्रसिद्धसम्बन्ध-लक्षणायां प्रमाणाभावेन पूषानुमन्त्रणमन्त्रवत् विकृतिपूत्कर्षपरिहाराय प्रकृत्यर्थत्वस्याप्यंगीकार्यत्वात्।

किंच मनोतामन्त्रस्य वचनविनियोगाभावे पशावेव देवताभूतस्य केवलाग्नेरपि तदीयपुरोडाशस्विष्टकृदादौ सत्त्वेन तत्संस्काराय प्रयोज्यतापत्तेः। अथापि तद्वचनं विकृत्यर्थं, तथास्तु। तथापि भवदुक्तरीत्याग्नीषोमयोः शब्दतोऽत्यन्तसहचरितत्वात् प्रसिद्धसम्बन्धमग्निपदमजहल्लक्षणयाग्नीषोमौ प्रकाशयेदेवेति मनोतामन्त्रः प्रकृतौ स्यात्! अग्निहोत्रमन्त्रस्तु व्यासक्तदेवतापक्षे कथं प्रवर्तेत, प्रसिद्धसम्बन्धाभावात्।

अपि च मन्त्रपदेषु वचनाभावेऽपि लक्षणाश्रयणं स्वाभ्युपगमविरुद्धम्। प्रतिनिधिसामानविध्यसमर्थनावसरे मन्त्राणां मुख्यार्थादन्यत्रासति वचने, सामर्थ्याभावेनेत्युक्तत्वात्।

अपि चाप्रसिद्धसम्बन्धेन वचनाभावेऽपि लक्षणाश्रयणे "व्रीहीणां मेधे"ति मन्त्रः यवप्रयोगेऽपि स्यात्। मन्त्रस्य प्रकरणिनो व्रीहिसम्बन्धेन चारितार्थ्येऽपि यवानां नियतप्रकाशकापेक्षयोत्थापिताकांक्षासत्वात्।

ननु पूषानुमन्त्रणमन्त्रस्य नाग्न्यादिषु प्रवृत्तिः। तेषां "अग्नेरहं देवयज्यये"त्यादि मन्त्रान्तरावरुद्धत्वादिति चेत्। "वसन्तमृतूनामि" त्यादिप्रयाजानुमन्त्रणमन्त्रवत् समावेशसम्भवात्। "अग्नये वो जुष्टं प्रोक्षामी"त्यादिमन्त्राणां बर्हिःप्रोक्षणादिषु मन्त्रान्तरावरुद्धेषु समावेशमस्मान् प्रत्यापाद्य, संप्रति मन्त्रान्तरावरोधादप्रवृत्तिरिति वाचोयुक्तेरप्ययुक्तत्वात्।

स्यादेतत् । "अग्निर्ज्योतिरग्निः स्वाहेति सायं जुहोति" इत्यादिविधिभिर्विनियुक्तत्वान्मन्त्राणां ऐन्द्रीवल्लक्षणाया प्रवृत्तिः स्यादिति । न । "यदग्नये च"त्यादिविधौ प्रजापतिमात्रविधिपक्षे मन्त्राणां श्रुतिवृत्तत्वे सम्भवति, अग्नि-प्रजापतिशब्दपरचतुर्थीद्वयस्वारस्ये च सम्भवति, मन्त्रविधीनामसमर्थविनियोजकत्वस्यैवायुक्तत्वात् ।

अथ प्रजापतिमात्रविधिपक्षे सूर्यवाक्यं व्यर्थं स्यात् । वह्निवाक्यादेव कालद्वयेऽपि प्रजापतिलाभसम्भवात् । मम तु व्यासक्तदेवतापक्षे सर्वं वाक्यं सफलम् । तथाहि-मिश्रलिङ्गः "अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहे"ति मन्त्रः सायं होमे प्रवर्तमानः स्वार्थपरः, तत्राग्नेः सत्त्वात् । प्रातःकाले तु प्रवर्तमानोऽस्वार्थपरः, तत्राग्नेरभावेनाग्निपदस्य स्तावकतया सूर्यविशेषणत्वात् । एवं 'सूर्यो ज्योतिर्ज्योतिरग्निस्वाहे"ति मन्त्रोऽपि । तथा च वैरूप्यापत्त्या उत्कर्षापत्तावनुत्कर्षार्थं मिश्रलिङ्गविनियोजकवचनाभावात्, अपेक्षितमेव ताभ्यामेव वचनाभ्यामवरुद्धे होमे समावेशार्थं शुद्ध-लिङ्गमन्त्रयोरपि विधिरावश्यक इति मन्त्रविधायकानि चत्वार्यपि वचनात्पर्यवस्यवन्ति । अग्निसूर्यवाक्यार्थवत्त्वन्तु स्पष्टमेवेति चेत् । मैवम् । चतुर्णामपि विधीनां त्वत्पक्षे वैयर्थ्यात् । मिश्रलिङ्गमन्त्रयोर्यदि कालद्वये प्रवृत्तौ वैरूप्यापत्तिः, तावता प्रकरणं बाधित्वा नोत्कर्षः कल्पनीयः । एककालमात्रसम्बन्धाङ्गीकारेण वैरूप्यस्य सुपरिहरत्वात् । स्वार्थपरत्वस्यैव मन्त्रयोः कालविशेषसम्बन्धे विनिगमकत्वसम्भवात् । वैरूप्यसंभवेऽपि पूषमन्त्रस्य स्वानुरूपपूषयागवत् ज्योतिर्गुणकाग्नि-सूर्यदेवताकयागान्तरस्यान्यत्राभावेन मिश्रलिङ्गयोरुत्कर्षायोगाच्च ।

एवं च कथमपि प्रकरण एव निवेशावश्यम्भावे तद्विधायकं वचनद्वयं व्यर्थमेव । एवं च स्पष्टलिङ्गत्वाच्छुद्धलिङ्गमन्त्रद्वयं प्रागेव प्राप्तमिति तद्विधायकवचनमप्यनर्थकमेव । मम तु कर्मणि देवतासम्प्रतिपत्त्यभावेन लिङ्गस्याविनियोजकत्वे वचनानां मन्त्रविधायकतयार्थवत्त्वम् ।

एवं च मम वचविनियुक्तमन्त्रवर्णादेव देवताकल्पने मिश्रलिङ्गमन्त्रस्थलेऽग्नि-सूर्ययोरुभयोर्देवतात्वं स्यादिति, तदनुसारि "यस्य वै द्वौ पुण्यौ गृहे वसतः" इत्यादि तदर्थवादवाक्यमपि स्वरसं भवति ।

नन्वेवं मूले मिश्रलिङ्गमन्त्रविधिद्वयं व्यवस्थार्थमित्युक्तं विरुध्यत इति चेत् । उच्यते । कर्मणां तावत् प्रथमं द्रव्यदेवतापेक्षा, तत्र तयोः शरीरभूतत्वात् । ततो बहिरङ्गमन्त्रापेक्षा । अपेक्षानुसारी च शास्त्रप्रवृत्तिक्रमः । शुद्धलिङ्गमन्त्रविधिद्वयं तु 'यदग्नये' इति देवताविधिवाक्यस्यानेकगुणविधानाशक्त्या अग्ने-

रन्यतः सिद्ध्यपेक्षायां तदनुसारेण शुद्धाग्निसमर्पणक्षमत्वात् प्रथमं प्रवर्तते। "सौर्यं चरुं निर्वपेदि'त्यादौ निर्वापप्रापकचोदकप्राथम्यासम्भववाधकेन भविष्यत्प्राप्तिमादाय निर्वपतेरनुवादत्वेऽपि सति सम्भवे औत्सर्गिक्यानुवादसमर्पकप्रवृत्तिमपेक्ष्य, अनुवादकशास्त्रप्रवृत्तेस्त्यागायोगात्।

एवं च मिश्रलिङ्गमन्त्रयोर्विध्यभावे प्रकरणात् स्वाहाकारलिङ्गाच्चाग्निहोत्रहोम एव निवेशावश्यम्भावे सम्पूर्णमन्त्रवर्णानुसरणासम्भवाल्लिङ्गैकदेशसम्वायमात्रेण 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी'ति मन्त्रस्य निर्वाप इव होमे प्रवृत्तिर्वाच्या। तथा च लिङ्गैकदेशाविशेषात् सायंकाल इव प्रातःकालेऽपि मिश्रलिङ्गौ प्राप्नुतः।

न च तौ तयोर्नियमेन प्राप्नुतः, एककालसम्बन्धादपि मन्त्रयोः प्रकरणपाठचारितार्थ्यात्। वचनप्राप्तयोः शुद्ध-लिङ्गमन्त्रयोरत्यन्तवाधादीपद्बाधस्य न्याय्यत्वाच्च। एवं मिश्रलिङ्गयोरव्यवस्थायां तद्विधायकं वचनं कालयोः व्यवस्थार्थमेव। एवं च वचनव्यवस्थापितमिश्रलिङ्गमन्त्रकृतसम्पूर्णलिङ्गस्वारस्यानुरोधादग्निसूर्ययोरपि तत्र होमदेवतात्वमिति सिद्ध्यति। तथात्व एव 'यस्य वै द्वौ पुण्यौ' इत्यादि तदर्थवादसामञ्जस्यात्।

एतेन सायंकाले सूर्यपदस्य परार्थता। प्रातःकालेऽग्निपदस्येति परास्तम्। उक्तरीत्योभयकालेऽपि मिश्रलिङ्गस्थपदानां स्वार्थपरत्वात्।

एवं चाग्निसूर्यविधिवाक्ययोः प्रजापतिमात्रविधायकत्वेन व्यवस्थायाः अनपेक्षितत्वेन निर्देशभेदात् व्यवस्थायामनुदाहरणत्वमिति सुष्ठूक्तम्। तथा च निर्देशभेदाद्व्यवस्थाया असम्प्रतिपन्नत्वेनापूर्वीयलक्षणायां रथन्तरादिषु धर्मसाङ्कर्यं दुर्वारमेव।

अथ 'बृहत्पृष्ठं भवति, रथन्तरं पृष्ठं भवती'त्युत्पत्तिविधिभ्यां बृहद्रथन्तरसाधनके पृष्ठसंज्ञके द्वे स्तोत्रे स्तः। तयोश्च द्वे अपूर्वे। तथा च मीलनादिवाक्यस्थबृहद्रथन्तरशब्दाभ्यां भिन्नभिन्नापूर्वसाधनत्वस्यैव लक्षणान्न मीलनादिसाङ्कर्यं इति चेत्। न। तयोर्वाक्ययोरुत्पत्तिविधित्वासिद्धेः। 'पृष्ठै स्तुवत' इति वाक्यस्यैव पृष्ठस्तोत्रोत्पत्तिपरत्वेन तत्र सामरूपगुणमात्रविधायकत्वोपपत्तौ सामविशिष्टपृष्ठविध्याश्रयणक्लेशायोगात्। अन्यथा 'पृष्ठैः स्तुवत' इत्यस्य पृष्ठापृष्ठसमुदाये लाक्षणिकत्वस्य वैयर्थ्यस्य चापत्तेः।

किं च पृष्ठशब्दस्य प्रकृतौ लिङ्गसमवायाल्लक्षणायामपि 'एकविंशं होतुः पृष्ठम्, त्रिणवं मैत्रावरुणस्य, सप्तदशं ब्राह्मणाच्छंसिनः, पञ्चदशमच्छावाकस्ये' त्यत्र मैत्रावरुणादिवाक्येष्वनुषक्तस्य पृष्ठशब्दस्य तदीयस्तोत्रेषु निरालम्बना, निष्प्रयोजना च लक्षणा स्यात्।

अत्राहुः—एवं प्रकृतौ पृष्ठबहुत्वे 'विश्वजित्सर्वपृष्ठो भवती'त्यत्र प्रकृतौ पृष्ठबहुत्वाभावात् षाडहिकसर्वपृष्ठताविधिरिति सिद्धान्तो व्याहन्येत। प्राकृतपृष्ठानां गृहमेधीयाज्यभागवत् चोदकपरिलोपाय विधानोपपत्तेः 'पृष्ठैः स्तुवत' इति नोत्पत्तिवाक्यमिति।

तदयुक्तम्। लाक्षणिकत्व-निरर्थकानुवादत्वयोः पृष्ठवाक्ये रथन्तरबृहद्वाक्ययोस्तु विशिष्टविधिगौरवस्य च परिहाराय पृष्ठवाक्यस्य उत्पत्तिपरत्वे निश्चिते 'विश्वजित्सर्वपृष्ठ' इत्यत्र तदनुसारेण गृहमेधीयवदपूर्वतार्थं प्राकृतपृष्ठविधायकत्वाङ्गीकारस्यैव न्याय्यत्वादभ्युपगमविरोधमात्रस्य पूर्वपक्षिणं प्रत्यदोषत्वात्। 'रथन्तरं पवमाने कुर्यात्, आर्भवे बृहत्, मध्यत इतराणि, वैरूपं होतुः सामः, वैराजं मैत्रावरुणस्य, रैवतं ब्राह्मणाच्छंसिनः, शाक्वरमच्छावाकस्ये'त्यत्र बृहद्रथन्तरवाक्ये सामविशिष्टस्तोत्रविधिपरेऽस्मिन् पक्षे विश्वजितोऽपूर्वत्वेन स्तोत्रानुवादासम्भवाद्वैरूपादिवाक्यानि तु प्राकृतसामनिवृत्त्यर्थं वैरूपादिविधायकानीति लिङ्गविरोधस्यापि युष्माभिरेव परिहृतत्वात्। एवं सत्येव पृष्ठशब्दस्य मुख्यत्वसम्भवात्। अन्यथा षाडहिकसामसु लक्षणापत्तेः।

अथावश्यं विश्वजिदधिकरणसिद्धान्तस्समर्थनीयः। तर्हि ब्रूमः—अस्तु प्रकृतौ पृष्ठबहुत्वम्। तथापि 'विश्वजित्सर्वपृष्ठ' इत्यत्र षाडहिकपृष्ठविधिरेव न ज्यौतिष्टोमिकपृष्ठविधिः, चोदकबाधापत्तेः। अबाधेनोपपत्तौ बाधस्यान्याय्यत्वात्। पृष्ठशब्द एव विनिगमनाविरहात् सर्वपृष्ठविधिसम्भवे सर्वशब्दानर्थक्यप्रसङ्गाच्च। 'रथन्तरं पवमाने कुर्यादि'त्यादिवाक्ये 'मध्यत इतराणी'त्येद् रथन्तरबृहद्व्यतिरिक्तानामन्येषामपि केषांचित् साम्नां केनचिद्विधिनाऽव्यवस्थयाप्रापितानां व्यवस्थार्थमिति स्वरसतो दृश्यते। इतरशब्दस्य प्राप्तानुवादित्वस्वारस्यात्सर्वपृष्ठवाक्यस्य प्राकृतपृष्ठविधिपरत्वे नावकल्पते, साम्नां प्राप्त्यभवात्। षाडहिकपृष्ठविधिपरत्वे तु स्वरसं भवतीत्यतो लिङ्गादपि षाडहिकपृष्ठविधिरेव। एतल्लिङ्गानुगृहीतत्वात् सामसु सर्वपृष्ठशब्दस्य लक्षणापि न दोषः।

अपि च प्राकृतपृष्ठविधिपक्षे 'रथन्तरं पवमाने कुर्यात्, आर्भवे बृहदित्य'नयोर्विशिष्टविधिरेव दोषः। मम तु साममात्रव्यवस्थापरत्वम्। एवं च एतल्लाघवादपि पृष्ठशब्दे सामलक्षणा न दोषः।

किं च 'वैरूपं होतुस्सामे' त्यादिवाक्यचतुष्टयमपि तव विधिपरम्। मम तु व्यवस्थापरमित्यपि लाघवम्।

तथाऽस्मिन्पक्षे तव प्राकृतानां बृहद्रथन्तर-वामदेव्य-नौधस-श्यैत-कालेयानां पृष्ठसाम्नां निवृत्तिर्विधिफलम्, विधीयमानसाम्नां प्राप्तिश्च। मम तु व्यवस्था-

मात्रम्। न तु कस्यचिन्निवृत्तिः, प्राप्तिर्वा, प्राकृतसामनिवृत्तेर्विश्वजिद्वाक्यफलत्वात्। तस्माच्चोदकालोपाय, सर्वशब्दसाफल्याय, इतराणीति शब्दसामंजस्याय, बहुविधलाघवाय, बह्वबाधाय च विश्वजिद्वाक्यं षाडहिकसर्वपृष्ठविधिपरमेवेति।

युष्मद्गुरवस्तु-षाडहिकस्तोत्राणामेव विधिः। न साम्नाम्, लक्षणापत्तेः। न च तत्र स्तोत्रबहुत्वाभावः, मन्त्रभेदे तत्सत्वादित्याहुः तन्न। मन्त्रभेदेऽपि बहिष्पवमानवत् स्तोत्रैक्यस्य वक्ष्यमाणत्वात्, षडहे स्तोत्रबहुत्वं नास्तीति तन्त्ररत्नविरोधाच्च।

ननु बृहद्रथन्तरवाक्ययोरुत्पत्तिविधित्वाभावे माहेन्द्रस्तोत्र एव बृहद्रथन्तरविधिरिति व्यवस्था न सिद्ध्यति, उत्पत्तिवाक्ये बहूनां पृष्ठानामुत्पन्नत्वेन गुणवाक्ये एकदेशमात्रानुवादे प्रमाणाभावादिति चेत्। गुणवाक्ये पृष्ठसामान्यानुवादेऽपि मैत्रावरुणादिपृष्ठानां प्रातिस्विकसामावरोधात् परिशेषान्माहेन्द्रस्तोत्र एव बृहद्रथन्तरव्यवस्थोपपत्तेः, रथन्तरादिसाम्नां "अभित्वा शूर नोनुम" इत्यादिकृचाञ्च क्रमेणाम्नानात् मैत्रावरुणस्तोत्रात्पूर्वं बृहद्रथन्तरसाधनकस्तोत्रावश्यम्भावेन माहेन्द्रे बृहद्रथन्तरव्यवस्थासिद्धेश्च "पिता वै वामदेव्यम्, पुत्राः पृष्ठानि, एतस्माद्वा एतानि योनेरसृज्यन्त, तस्मात् पृष्ठानां स्तोत्रं वामदेव्येनानुष्टुवन्ति शान्त्यै, यद्धि पुत्रोऽशान्तं चरति, पिता तच्छमयति"इति वामदेव्यार्थवादबलादपि वामदेव्यापूर्वप्रयोज्यत्वावश्यम्भावे माहेन्द्रपृष्ठ एव तयोर्व्यवस्थितेश्च। पृष्ठशब्दस्य माहेन्द्रस्तोत्रे निरूढत्वेन गुणवाक्ये तस्यैवोद्देशाच्च।

नन्वेवं बृहद्रथन्तरयोर्विकल्पवचनमनर्थकं स्यात्। 'बृहत्पृष्ठं भवति, रथन्तरं पृष्ठं भवति'इत्यनयोः पृष्ठशब्दस्य प्राथमिकमाहेन्द्रस्तोत्रानुवादित्वेऽपि तस्मिन्नक्षराभिव्यक्तिरूपदृष्टार्थतया न्यायत एव विकल्पसिद्धेरिति चेत्। न। प्राथम्यस्य माहेन्द्रानुवादप्रयोजकत्वानङ्गीकारात्। पृष्ठशब्दस्य निरूढ्या माहेन्द्रविषयत्वेऽपि विकल्पवचनानर्थक्यमेवेति चेत्। विकल्पवचनस्यैवाविकल्पत्वात्, यस्यानर्थक्यमुच्यते। अत एवैतादृशं विकल्पवचनम स्तु इति ग्रन्थकारा व्यवहरन्तीति मूले परोक्षवदभिधानम्। अग्रे तद्वाक्यप्रयोजनाभिधान तु अभ्युपेत्यवादमात्रम्।

किं च 'यदि रथन्तरसामा सोमस्स्यादैन्द्रवायवाग्रान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रानि'ति वाक्ययोर्निमित्तकरणादपि साम्नोर्विकल्पसिद्धौ विकल्प-

वचनानर्थक्यस्यापरिहार्यत्वात्। ननु विकल्पविध्यभावे कादाचित्कविकल्पेऽपि साम्नोर्निमित्ततोपपत्तेः प्रकृतौ कदाचित्समुच्चययोऽपि स्यादिति चेत्। इष्टापत्तेः। अत एव आपस्तम्बसूत्र'मुभयसाम्नावे'ति समुच्चयं शास्ति। अपि च 'संस्रव उभे कुर्या'दित्यादि वैकृतसमुच्चयविधिसाफल्यायापि प्रकृतविकल्प आवश्यक एव, अन्यथा प्रकृतावपि समुच्चये संस्रवादौ चोदकादेव समुच्चयसिद्धौ तद्विधि-वैफल्यापत्तेः।

एवं 'अग्रवतीं बृहत्पृष्ठस्य, उपवतीं रथन्तरपृष्ठस्य' इति निमित्तवचनमप्युदाहार्यम्। एवं च विकल्पवचनमनर्थकमेव।

किं च बृहद्रथन्तरवाक्याभ्यां द्वे पृष्ठे उत्पन्ने इति मतेऽपि विकल्पवचनमनर्थकमेव, भिन्नापूर्वसाधनयोर्विकल्पव्यवहाराभावात्। न हि युगपदनुपसंह्रियमाणयोरपि दीक्षणीया-प्रयाजयोर्विकल्पव्यवहारः।

ननु साम्नोर्विकल्पायोगेऽपि स्तोत्रयोर्विकल्पार्थं वचनमिति चेत्। मैवम्। बृहद्रथन्तरवाक्ययोरुत्पत्तिपरत्वासिद्धेः, विशिष्टविधिगौरवादिभ्यः, येन स्तोत्र-भेदसिद्ध्या विकल्पोपेक्षितः स्यात्।

किं च मत्पक्षे दृष्टार्थत्वाद्विकल्पो न्यायप्राप्त इति यदुक्तम्। तत्र पृच्छामि-कथं विकल्पः? अवघात–पेषणयोरपि दृष्टार्थयोर्व्रीहिषु विकल्पापत्तेः। तत्र द्वार-भेदान्न विकल्प इति चेत्। ममापि तुल्यम्। अभिव्यंजनीययोः"अभित्वा शूर नोनुमः, त्वामिद्धि हवामहे" इत्यनयोः ऋचोर्भेदात्।

ननु एवं तत्र सामसमुच्चयस्तवः स्यादिति चेत्। न। साम्नो लिङ्गाद्वचनाद्वि-कल्पे यदास्य साम्नो निवृत्तिः, तदा तदभिव्यङ्ग्यायाः ऋचो प्रगीतत्वेन प्रगाण-साध्यस्तोत्रसम्बन्धायोगेन तदङ्गत्वाभावादप्रयोगे तदर्थसाम्नः प्रवृत्त्यभावात्। कदाचित् स्तोत्राङ्गतयापि अपिवत्यादितृचयोरुत्तराग्रन्थपाठस्य साफल्यात्।

ननु पृष्ठवाक्यस्योत्पत्तिपरत्वे बृहद्रथन्तरवाक्ययोर्वैयर्थ्यं स्यात्। तथा हि ते हि वाक्ये न स्तुतिविधायके, साम्नोरध्ययनादेव स्वरूपेण तत्तदृक्स-म्बन्धित्वेन च प्राप्तेः तत्तदाधारीभूतानामृचां प्रकरणात् स्तोत्राङ्गत्वेन तदारूढ-साम्नोरपि स्तोत्राङ्गत्वेनापि प्राप्तत्वात्। तस्मात् विधेयाभावाद्वैयर्थ्यं मा भूदिति पृष्ठवाक्यमेवैकमनुवादकं सत् व्यर्थमस्त्विति चेत्। न। "तस्मात्पृष्ठानां स्तोत्रं वामदेव्येनानुष्टुवन्ति"इति प्रागुदाहृतवामदेव्यार्थवादेन मैत्रावरुणस्तोत्रात्मक-वामदेव्यस्तोत्रपूर्वभाविहोतृपृष्ठात्मकमाहेन्द्रस्तोत्रविषयस्य रथन्तरस्य, बृहतश्च "बृहत्पृष्ठं भवति, रथन्तरं पृष्ठं भवती"त्यनुवादे सति विकृतिषु पृष्ठविशेषौदा-सीन्येन 'कण्वरथन्तरं पृष्ठं भवती'ति सामान्यतः सामविधिरपि माहेन्द्रस्तोत्र एव सामविधिरिति व्यवतिष्ठते।

प्रकृतौ पृष्ठशब्दस्य सामसमानाधिकरणस्य माहेन्द्रविषयतया विकृतावपि तादृशपृष्ठशब्दस्य तत्समानार्थकत्वाभावे तदनुवादानार्थक्यप्रसङ्गात्। प्रकृतिनिर्देशसाम्यस्य विकृतिष्वर्थविशेषनिर्णायकत्वाभावे च "एकोक्थ्ये वैरूपसामे"त्यादौ रथन्तरसामा बृहत्सामा इत्यादि प्रकृतिस्थबहुव्रीहिनिर्देशसाम्येन माहेन्द्रविषयत्वं दशमेऽङ्गीकृतं भज्येत। तस्मान्न वाक्ययोर्वैयर्थ्यम्। अत्र सामरूपगुणविधित्वाङ्गीकारे न वैयर्थ्यमित्यतिशयार्थं मूलोक्तमिति वेदितव्यम्।

कौस्तुभकृतस्तु—पृष्ठवाक्यस्य उत्पत्तिपरत्वेऽपि पृष्ठानि षट्, षण्णां तृचानामाम्नानादित्याहुः। तदयुक्तम्। "अभित्वा शूर नो नुमः त्वमिद्धि"इत्यादि तृचाभ्यां 'माहेन्द्रं स्तोत्रमेकं, कवती'इति तृचेन मैत्रावरुणं स्तोत्रं द्वितीयम्, 'तं वोदस्म मृतिषहम् अभि प्रवस्सुराधस' इत्यादि तृचाभ्यां ब्रह्मसामस्तोत्रं तृतीयम्, "तरोभिर्वो विदद्वसुमि"ति, अच्छावाकस्तोत्रं चतुर्थम्, षट्सु चैषु तृचेषु रथन्तर-बृहत्-वामदेव्य-नौधस-श्यैत-कालेयाख्यानि क्रमेण षट् सामानि गीयन्त इति स्थितिः। तत्र न तावत् सामभेदात् स्तुतिभेदः। आज्यस्तोत्रे गायत्रैकसामके सामाभेदेऽपि स्तुतिभेददर्शनेन तद्भेदस्यापि तत्राप्रयोजकत्वान्न ऋग्भेदवत्तस्यापि तत्राप्रयोजकत्वात्, तृचानां भिन्नगुणाभिधायित्वात् स्तुतिभेदः आवश्यक इति चेत्। प्रत्यृचं गुणभेदात् प्रतितृचं स्तुतित्रयापत्तेः। प्रायेण प्रतिपादं प्रतिपदं वा गुणभेदात् प्रत्यृचमनेकस्तुत्यापत्तेश्च। न चेष्टापत्तिः। अग्निष्टोमे द्वादशस्तोत्रत्वभङ्गापत्तेः। षडेव पृष्ठानीति भवदभ्युपगमविरोधाच्च। कथं तर्हि तथापि चतुष्ट्वनिश्चय इति चेत्। यथाहि 'आज्यैः स्तुवते', "पञ्चदशं होतुराज्यम्, सप्तदशं मैत्रावरुणस्य, एकविंशं ब्राह्मणाच्छंसिनः, पञ्चदशमच्छावाकस्य"इति निर्देशात् आज्यानां चतुष्ट्वम्। एवं "पृष्ठैः स्तुवते, एकविंशं होतुः, पृष्ठं, त्रिणवं मैत्रावरुणस्य, सप्तदशं ब्राह्मणाच्छंसिनः, पञ्चदशमच्छावाकस्य"इति निर्देशात् "पृष्ठानामपि चतुष्ट्वमि"ति निश्चयसम्भवात्, एकत्रापि स्तोत्रे भिन्नगुणाभिधायितृचान्तरस्य ऋगन्तरवदविरोधित्वात्।

एतेन न्यायसुधायामेकमेव पृष्ठस्तोत्रम्। तस्य च "पृष्ठैः स्तुवत" इत्युत्पत्तिः। तत्रत्यबहुवचनं तु प्रकृतेः पृष्ठापृष्ठसमुदाये छत्रिवदजहल्लक्षणयोपपन्नम्। बृहद्रथन्तरवाक्ये तत्रैव पृष्ठे गुणविधायिनी, तत्रत्यपृष्ठपदं च सामपदसामानाधिकरण्यार्थं पृष्ठसाधनलक्षकम्, न तु माहेन्द्रस्तोत्रभेदवादिपार्थसारथिमत इव मुख्ययोर्विधेयत्वार्थयोश्च बृहद्रथन्तरपदयोर्मत्वर्थलक्षणा, जघन्यपृष्ठपद एव तदाश्रयणात्। अस्मिन् पक्षे उत्पत्तौ स्तुतिसामानाधिकरण्यात् पृष्ठपदस्य स्तुति-

वाचित्वं व्यक्तम्। न बृहद्रथन्तरवाक्ययोरुत्पत्तिपक्ष इव क्लेशेन समर्थनीयम्। न वा एकमेव माहेन्द्रस्तोत्रं "पृष्ठैः स्तुवत" इत्येवोत्पत्तिवाक्यमिति भाष्यवार्तिक-ग्रन्थविरोधः।

एवञ्च बृहद्रथन्तरवाक्यस्य पृष्ठशब्दस्य माहेन्द्रस्तुतिमात्रवाचित्वादुत्पत्तिवाक्यगतोऽपि पृष्ठशब्दो बहुवचनान्तत्वाच्छत्रिवल्लाक्षणिक इत्युक्तमपास्तम्। उत्पत्तौ लक्षणादोषात् "संख्यया पृष्ठानामेवाज्यभागौ यजती"त्यादिवद् भेदाच्च।

न च माहेन्द्र एव सामविधानात्पृष्ठपदं लाक्षणिकमित्युक्तमिति वाच्यम्, अन्योन्याश्रयात्। उत्पत्तिवाक्ये पृष्ठपदस्य माहेन्द्र एव शक्तावन्यत्र लक्षणायां बृहद्रथन्तरवाक्यस्य माहेन्द्रमात्रवाचित्वम्। तस्य तथात्वे उत्पत्तिवाक्यस्थ-पृष्ठपदस्याजहल्लक्षणेति।

किंचालौकिकस्य पृष्ठपदस्य यत्रैवोत्पत्तिवाक्ये शक्तिर्ग्राह्या, तत्रैव कथं लक्षणा स्यात्? शक्तौ निश्चितायां हि तत्सम्बन्धेनान्यत्र लक्षणा स्वीकार्या। अपि च मैत्रावरुणस्तोत्राणामलक्ष्यमाणानामपि स्तोत्रत्वासिद्धिप्रसङ्गात्। कवत्यादितृचानां गुण्यभिधानपरत्वोपपत्तावदृष्टार्थकगुणाभिधानपरत्वे मानाभावात्। अन्यथाभिवतिबलादेव माहेन्द्रस्यापि स्तोत्रत्वसिद्धौ पृष्ठवाक्यस्यैव वैयर्थ्यापत्तेः।

अपि चैवं "स्तुवत" इति पदसामानाधिकरण्यान्मैत्रावरुणस्तोत्रादीनां स्तोत्रत्वसिद्धावपि "पाशानि"तिवत् प्रातिपदिकार्थानुग्रहाय बहुवचनस्यैकत्वे लक्षणापत्तेः। तस्मात्स्तोत्रान्तरस्यानुवाद्यत्वेनाप्राप्तेः संख्याया अपि विधेयतया "आज्यभागौ यजति"इतिवत् पृष्ठभेद एव न्याय्य इति चत्वारिपृष्ठानीति युक्तमेव दीक्षितेन्द्रैरङ्गीकृतम्।

अत एव तृचभेदात्स्तोत्रभेद इति सोमयाजिदीक्षितानामभ्युपगमोऽपि परास्तः। ऋगाधिक्य इव तृचाधिक्येऽपि स्तोत्रैक्यस्याविरुद्धत्वात्। एवं चैकस्मिन्नेव माहेन्द्रस्तोत्रे बृहद्रथन्तरयोः समुच्चयप्राप्तौ तद्विकल्पार्थवचनं सफलमेव, तद्विकल्पे च तदाधारतृचस्याप्रगीतस्य स्तुत्यनिर्वर्तकतया अर्थाद्विकल्पः इत्युक्तमेव।

किंच विकल्पवचनमर्थवदेव। "पृष्ठैः स्तुवत" इति विहितेषु स्तोत्रेषु रथन्तराद्यधिकसामोपदेशात्स्तोत्राधिक्यशङ्कावारकत्वादेकस्मिन्नेव माहेन्द्रस्तोत्रे साम्नोर्विकल्प इत्युक्तौ तादृशशंकानिरासात्।

न च एकस्तोत्रान्वितत्वेन बृहद्रथन्तरयोर्निश्चये सति तादृशशङ्कैव नोन्मिषतीति वाच्यम्, एकस्तोत्रान्वितत्वनिश्चयवदस्मादपि वाक्यात्तच्छङ्कावारणसम्भवात्। अन्यथा अस्माद्वाक्यात्तच्छङ्कावारणे एकस्तोत्रान्वितत्वनिश्चयादस्यापि तच्छङ्कावारकत्वानापत्तेः। एतद्विकल्पवचनात्प्रागेकस्तोत्रान्वितत्वस्याप्यनिश्चयाच्च।

ननु सत्यपि विकल्पवचने बृहद्रथन्तरसाध्यस्तोत्रद्वयसमुच्चयमात्रनिरासः स्यात्, न त्वधिकस्तोत्रविधानशङ्कानिरासोऽपि। तत्र तदभावसामर्थ्यादिति चेत्। न। साम्नोर्विकल्पबलेन तच्छेषिस्तोत्रैक्यसिद्धौ यथैव तद्भेदापेक्षसमुच्चयशङ्का निरस्यते, तथैव तद्भेदापेक्षस्तोत्राधिक्यशङ्काया अपि निरासात्। एवं समुच्चयनिरासार्थमपि विकल्पवचनस्यार्थवत्वाच्च। ज्योतिष्टोमस्य द्वादशस्तोत्रत्वलिङ्गादधिकस्तोत्रशङ्कानुदयेऽप्यधिकसामाम्नानादवश्यं यत्र क्वचित्कल्पनीयस्य विकल्पस्य बृहद्रथन्तरयोरेव नियमार्थतया विकल्पवचनसाफल्याच्च।

न चैवं माहेन्द्रस्तोत्र एव तयोर्विकल्प इति नियमो न सिद्ध्यति। विकल्पवाक्यस्थपृष्ठशब्दस्य सर्वस्तोत्रसाधारणत्वान्माहेन्द्रस्तोत्र एव निरुढत्वे च गुणवाक्ययोरपि तत्रैव रथन्तरादिविध्यापत्तौ विकल्पवचनं व्यर्थमेव स्यादिति वाच्यम्। विकल्पवाक्यस्थपृष्ठशब्दस्य निरूढया माहेन्द्रपरत्वाद्गुणवाक्ययोरपि माहेन्द्रपरत्वादेव तत्र सामसमुच्चयप्राप्तौ विकल्पवचनस्य सुतरामर्थवत्त्वात्। न ह्यस्माकं माहेन्द्रस्तोत्रभेदः, येन साम्नोश्शेषिभेदाद्विकल्पोऽनर्थकः स्यात्।

वस्तुतस्तु—साम्नोर्माहेन्द्रविषयत्वं क्रमात्, तदीयमन्त्रसम्बन्धाच्च सिद्धमेव। तत्र विकल्पमात्रार्थं वचनमर्थवदेव। तथा च पृष्ठपदस्य साधारण्येऽपि न दोषः। एवमेवोक्तलिङ्गादधिकस्तोत्रनिरासेऽपि स्तोत्रविशेषे विकल्पनीयमार्थत्वेनैव पृष्ठद्वित्वाभ्युपगन्त्रापि विकल्पवचनफलवत्त्वस्य वक्तव्यत्वाच्च।

यत्वत्र 'पृष्ठैः स्तुवत' इत्यस्यानुवादत्वेऽपि साफल्यमेव। अनुवादाभावे 'सप्तदशानि पृष्ठानी'ति स्तोमविधिवाक्यस्थपृष्ठपदस्य मुख्यपृष्ठमात्रवाचित्वं स्यात्। सति त्वनुवादे तत्साफल्याय पृष्ठपदस्य चतुर्षु स्तोत्रेषु लक्षणायां स्तोमस्य सर्वस्तोत्रसाधारण्यसिद्धेरिति। तदयुक्तम्। अनुवादाभावेऽपि वहुवचनबलादेव स्तोमगुणवाक्यस्थपृष्ठशब्दस्याजहल्लक्षणोपपत्तेः।

न च 'पाशानि'तिवत्प्रकृत्यर्थमुख्यत्वाय एव लाक्षणिकः स्यादिति वाच्यम्। एकस्मिन् वहुवचनस्य साधुत्वेऽपि पृष्ठद्वित्ववादिनस्तव द्वयोः पृष्ठयोः वहुवचनस्यासाधुत्वे लक्षणायोगात्।

न च तत्रान्यतरपृष्ठ एव स्तोमविधिपर्यवसानं शक्यशङ्कम्, विनिगमनाविरहेणान्यस्मिन्पृष्ठे स्तोमविधिरिति नियन्तुमशक्यतया स्तोमविधिवाक्यप्रतीत्यपर्यवसानात्।

"प्राचीनप्रवणे वैश्वदेवेन" इत्यत्र तु शब्दासाधुत्वबाधकाभावेन मुख्यवैश्वदेवयागे प्राचीनप्रवणताविधिनिरासाय वैश्वदेवयागसमुदायलक्षणार्थं 'वैश्वदेवेन यजेत' इति समुदायानुवादकं वाक्यं सार्थकमेव।

किञ्चैवमपि विशिष्टविधिगौरवदोषानुद्धारादित्यास्तां तावत्। अत्र च दूषणान्तराण्यस्माभिरपूर्वीयलक्षणाखण्डने प्रपञ्चितानीति, न लिखितानि। तान्यपि तत एवावगन्तव्यानि।

इति श्रीमदद्वैतविद्याचार्यविश्वजिद्याजिश्रीरंगराजाध्वरिवरसूनोश्चतुरधिकशतप्रबन्धनिर्माणधुरन्धरश्रीकण्ठमतप्रतिष्ठापकमहाव्रतयाजिश्रीमदप्पय्यदीक्षितसोदर्यस्य, श्रीमन्नल्लबोम्मकुलार्णवपूर्णचन्द्रचिन्नमाम्बागर्भमुक्ताफलब्रह्मण्यविरुदाङ्कितचोक्कनाथभूपालप्रियसचिवचिन्नबोम्मभूपालहृदयकुहरविहरमाणसाम्बशिवप्रेरितेनाप्पय्यदीक्षितेन विरचितायां दुरुहशिक्षायामपूर्वसाधनत्वाक्षेपोद्धारभंगो नाम तृतीयस्तरंगः।



# अथाग्निविध्याक्षेपसमर्थनभङ्गो नाम चतुर्थरतरंगः

"विधिरत्यन्तमप्राप्ते" इत्यपूर्वविधिलक्षणमग्निविधिष्वव्याप्तमिति प्रथम-श्लोक आक्षिप्तम्। तद्युक्तमित्याक्षेपव्याजेन बहवः शास्त्रसिद्धान्ताः शिथिला इति दर्शितम् "पश्वाद्यर्थो हि नैव प्रकृतिषु३७" इत्यादिभिः श्लोकैः।

एवं हि तत्—"य एवं विद्वानग्निं चिनुते" इत्युत्पन्नोऽग्निः 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति, तमुक्थ्येन, तमतिरात्रेण"इऽत्यादिवाक्यैः क्रत्वर्थतया विधीयत इति सिद्धान्तस्थितिः। तत्र प्रकृतितश्चोदकात्सम्भवत्प्राप्तिकाग्नि-विषयत्वादेषां विधित्वमयुक्तमितीत्येवायुक्तम्। अग्नेर्विकृतिषु चोदकात्प्राप्त्य-सिद्धेः। प्रकृतावङ्गस्य ह्यतिदेशः। "पशुकामश्चिन्वीत"इति वाक्येनाग्नेः फलार्थ-तया प्रकृत्यङ्गत्वस्यैवासिद्धेः। "अथाऽतोऽग्निमग्निष्टोमेनानुयजन्ती"त्यस्यापेक्षि-ताश्रयसमर्पकत्वात्, सिद्धरूपस्याग्नेराश्रयानुरागं विना फलसम्पादनाशक्तेः। सावित्रहोमाद्यग्न्यङ्गानां सौमिकदीक्षणीयाद्यङ्गसंवलनस्य विकृतिमध्येऽग्निम्प्रा-पय्यापि चरितार्थस्य प्रकृतिरूपाश्रयप्रापणाशक्तेः, प्रकृतेः प्राकरणिकोत्तरवेद्यव-रोधात्।

एते"नाग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिरि"ति दाशमिकाधिकरणम-युक्तमिति दर्शितम्। न चाग्नेः फलार्थत्वमसिद्धमिति वाच्यम्। 'पशुकामश्चिन्वी-त'इति वाक्यस्याभागिप्रतिषेधसूत्रे वार्तिक-न्यायसुधयोरङ्गीकृतत्वात्। एवं च तद्वार्तिकस्यापि दाशमिकसूत्रविरोधः, तदीयवार्तिकविरोधश्चेति दिक्। अत्र नव्यैर्न कोऽपि परिहारो दत्तः।

यत्तु 'पुरुषार्थसमासक्तेः काम्यं नित्यस्य बाधकमि'ति न्यायेन काम्योऽग्नि-रुत्तरवेदिं बाधेत गोदोहनमिव चमसम्। तथाचाग्नेः प्रकृत्याश्रयत्वस्यापि लब्धत्वादग्निष्टोमवाक्यमङ्गताबोधकमेवेति, तदपि दीक्षितेन्द्रैरेवोद्भावितमिति न स्वपरिहारः।

वस्तुतो नायमपि परिहारः। गोदोहनस्य प्रकरणाम्नानवैफल्यं मा भूदिति दर्शपूर्णमासापूर्वसाधनाप्प्रणयनाश्रयकत्वे सिद्धे व्रीहियववत् दृष्टार्थतया चमस-गोदोहनयोरेकाश्रययोर्विकल्पे च सिद्धे, फलकामनायां सत्यां गोदोहनमेवा-नुष्ठेयम्। तदभावे केवलं चमस इति विकल्पाश्रितव्यवस्थाया काम्यबलवत्वन्या-यस्योपयोगः। प्रकृते त्वनारभ्याधीतस्याग्नेः प्रकृतावपूर्वसम्बन्धिज्योतिष्टोमाश्रयत्वं

न सम्प्रतिपन्नम्। अङ्गसंवलनलिङ्गस्य प्रकरणोपदिष्टोत्तरवेद्यबाधाय विकृतिरूपाश्रयसमर्पणोपक्षीणत्वात्, स्वतः प्रकरणाभावाच्च। एवञ्चाग्न्युत्तरवेद्योरेकाश्रयत्वाभावेन विकल्पासिद्धौ काम्यबलवत्त्वन्यायः क्वोपयुज्यते? अतः प्रकृत्याश्रयसमर्पकत्वादग्निष्टोमवाक्यस्य नाग्निः प्रकृत्यङ्गम्।

न चैवं मूलविरोधः। एवंविधास्वरसस्यापि च 'काम्येनाग्निने'त्यादियुक्त्यन्तराभिधानेन "नित्यात्काम्यस्य शैध्यात् प्रकृतिमपि समापद्यतामि"ति ३२ श्लोकस्थापिना च सूचितत्वात्।

एतेन 'उत्तरवेद्यां ह्यग्निश्चीयते' इति सङ्कर्षोदाहृतवचनबलादग्न्युत्तरवेद्योः समुच्चयावगमादग्निना प्रकृते नोत्तरवेदेरत्यन्तं बाधः। 'बर्हिषि हवींष्यासादयती'ति वचनबलात् "वेद्यां हवींष्यासादयती"ति वाक्यावगतस्येव 'उत्तरवेद्यामग्निं निदधाती'ति वाक्यावगतस्य साक्षात्सम्बन्धस्य बाधेन स्वारस्यभङ्गमात्रम्। तथा चाग्नेर्लिङ्गादेव प्रकृत्याश्रयकत्वसिद्धिरित्यपि प्रौढिवाद इति सिद्धम्। लिङ्गकल्प्यसम्बन्धस्य विकृतिमादायोपपत्तौ प्राकरणिकोत्तरवेदिस्वारस्यभङ्गस्याप्यनुचितत्वात्। तस्मादङ्गत्वमसिद्धमेवेति।

"नित्यात्काम्यस्ये"त्यादिश्लोकेनाग्नेः प्रकृत्यङ्गत्वमभ्युपेत्यापि न प्रागुपक्षिप्ताव्याप्त्यवकाशः। अग्निष्टोमोक्थ्यातिरात्रवाक्यानां तत्तत्संस्थावच्छेदेन प्रकृतावप्राप्ताग्निप्रापणार्थत्वात्। न च तेषां वाक्यानां तत्तत्संस्थाकप्रकृति-विकृतिसाधारणतया विकृत्यङ्गावच्छेदेन चोदकलभ्याग्निविषयतयाऽव्याप्तिः स्यादेवेति वाच्यम्। एतद्विध्यप्रवृत्तौ प्रकृतावप्यग्निर्न स्यात्। तद्वाक्यैकविधेयत्वादग्नेरतो नाव्याप्त्यवकाश इति दूषितम्।

अत्र नव्याः—अग्निष्टोमवाक्यस्य प्राकृताग्निविधित्वाकारः, वैकृताग्निविधित्वाकारश्चेत्याकारद्वयमस्ति। तत्र वैकृताग्निविधित्वाकारेऽव्याप्तिः। वैकृताग्निविधित्वाभावे प्राकृताग्निविधित्वाकारापन्नवाक्यात्प्रकृतावग्नेरङ्गत्वेन चोदकादेव विकृत्यग्निष्टोमे प्राप्तिसम्भवादित्याहुः।

अत्र ब्रूमः। भवेदेवं यद्ययमग्निष्टोमविधिः प्रथमं प्रकृत्यग्निष्टोममात्रेऽग्निं विधाय, पश्चाद्विकृत्यग्निष्टोमेषु विदध्यात्। तदा द्वितीयवारप्रवृत्तिलभ्यवैकृताग्निविधित्वाकाराभावेऽपि प्रथमप्रवृत्त्यैव प्रकृतेरग्निमत्वात्। ततश्चोदकादग्निः सम्भाव्यत इति वैकृताग्निविधित्वाकारे स्यादव्याप्तिरिति।

तत्तु न सम्भवति, विरम्य व्यापारप्रसङ्गादेव। यदा त्वग्निष्टोमसंस्थाकत्वावच्छिन्ने सर्वत्रैकविधेयाग्निविधिपरमिदं वाक्यम्, तदा एतद्विध्यप्रवृत्तौ प्रकृतावप्यग्निर्नास्तीति काव्याप्तिरिति मूल एव स्फुटम्।

यद्युच्येत सर्वत्र लक्षणीयविध्यप्रवृत्तिस्तर्किता वाच्या। अन्यथा सम्भवात्। तथा च विरम्य व्यापारभीत्यैकधैव प्रवृत्तस्यापि विधेर्वैकृतांशाभावतर्कणे को दोषः ? एवं च तत्राव्याप्तिः स्यादेवेति। मैवम्। लक्षणीयविध्यप्रवृत्तावप्राप्तविषयत्वमादायापूर्वविधित्वोपपत्तौ लक्षणीयविध्यंशाप्रवृत्तितर्कणमित्यंशभेदविवक्षामधिकां स्वीकृत्याव्याप्तिदानस्यायुक्तत्वात्। अवहननीय-विदलनीय-व्रीहिविशेषौदासीन्येन व्रीहित्वमात्रपुरस्कारेण प्रवृत्तस्यापि "व्रीहीनवहन्ती"ति नियमविधेरवहननीयव्रीह्यंशमात्रविषयत्वे तर्किते वस्तुतो विदलनीयव्रीह्यंशे अवहननस्य कथमप्यप्राप्त्या तद्विषयावघातविधायकस्यापूर्वविधित्वापत्तेश्च। न चेष्टापत्तिः। एवं हीतरांशेऽनुवादमात्ररूपतया नियमविधित्वव्याघातात्।

अथ "व्रीहीनवहन्ती"ति विधिरंशभेदेनानुवादोऽपूर्वविधिश्चास्त्येव। अंशभेदौदासीन्येन प्रवृत्त्यपेक्षया नियमश्च स्यादिति चेत्। तर्ह्यग्निष्टोमविधेरपि प्रकृत्यंशावच्छेदेनापूर्वविधित्वे सिद्धे वैकृताग्निविध्यंशेऽपूर्वविधित्वाभावेऽप्यक्षतेरव्याप्तिरदोष एव स्यात्।

वस्तुतो विधेरेकत्वेन प्राकृत-वैकृताग्निष्टोमसंस्थेषूपदेशत एवाग्निप्राप्तेः अविशेषेणाग्न्याश्रितगुणकामप्राप्तेरुपपत्तावनुष्ठानविशेषाभावाच्च नापूर्वविधित्वाभ्युपगमे कोऽपि दोषः।

किञ्चैवमव्याप्तिमात्रसमर्थनेऽपि दाशमिकाधिकरणानुपपत्त्यादिस्तदवस्थः एव। यः सिद्धान्तिना अवश्यं परिहरणीयः, तत्रैव हि पूर्वपक्षिणः संरम्भः। न हि स्वोक्ताव्याप्तिखण्डनमात्रे कस्यापि प्रवृत्तिस्सम्भवति।

यत्तु "तमुक्थ्येन, तमतिरात्रेणे"ति विध्योरव्याप्तिः। न च उक्थ्यातिरात्रसंस्थस्य ज्योतिष्टोमस्याङ्गत्वेनाप्राप्तोऽग्निरुक्थ्यातिरात्रवाक्याभ्यां विधीयत इति नाव्याप्तिरिति वाच्यम्। विशिष्य ज्योतिष्टोमे अग्नेरङ्गत्वेन ज्योतिष्टोमवाक्यादेव प्राप्तत्वेनोक्थ्यातिरात्रसंस्थाङ्गत्वेनाग्निविधौ पर्यवसानं तयोर्वाच्यम्। तथा च चमसधर्माणां गोदोहन इवाग्निष्टोमसंस्थाधर्माणां कार्यापत्त्या प्राप्तिस्सम्भवतीत्यव्याप्तिः स्यादेवेति।

तन्न। विशिष्य ज्योतिष्टोमाङ्गत्वेनैवाग्निसिद्धौ, तदाश्रितगुणकामप्रवृत्तेरपि सिद्धौ, तत्रत्यकाम्यसंस्थार्थत्वेनाग्नेरङ्गत्वाभावेऽप्यनुष्ठानविशेषाभावेनोक्थ्यातिरात्रवाक्ययोः संस्थाङ्गतयाग्निविधायकत्वाभावेनानुवादमात्ररूपतापत्तौ तत्राव्याप्तेरनवकाशात्, संस्थार्थत्वेनाग्नेरावश्यकत्वेऽप्युक्थ्यातिरात्रवाक्याभ्यां विधेय एवाग्निरिति न तत्राव्याप्तिः।

न च नित्याग्निष्टोमसंस्थात एव तयोस्तत्कार्योपन्नयोरग्निः प्राप्यत इति प्राप्तविषयत्वादव्याप्तिः स्यादेवेति वाच्यम्। अग्निष्टोमसंस्थायामेवाग्नेरसिद्धेरग्निष्टोमवाक्यस्याग्निष्टोमसंस्थायां निमित्तो ज्योतिष्टोम एवाग्निविधायकत्वात्। अन्यथा "अग्रवतीं बृहत्पृष्ठस्ये"त्यत्रापि बृहत्पृष्ठार्थतयाप्यग्रवतीविधायकत्वापत्तेः।

यदि चाग्रवत्याः प्रकरणपाठाज्ज्योतिष्टोमार्थतया प्राप्तायाः यथाप्राप्तिनियम्यतया निमित्तमात्रार्थत्वं "बृहत्पृष्ठपदस्ये"ति, तदाऽग्नेरप्यङ्गसंवलनादिभिः क्रतुसम्बन्धितयावगतस्य क्रतावेवाङ्गतया विधिपरमग्निष्टोमवाक्यम्, अग्निष्टोमपदं च निमित्तमात्रार्थमिति तुल्यम्।

यदि च संस्थाया न निमित्तत्वम्, किन्तु ज्योतिष्टोमवदग्निं प्रति शेषित्वमेव, तदा षोडशिन्यपि ज्योतिष्टोमार्थे, नाग्निरनुष्ठीयेत। अङ्गप्रधानार्थस्याङ्गाभावेऽपि प्रधानायानुष्ठेयत्वादङ्गप्रधानार्थानां वेदि-बर्हिरादीनां खण्डसंस्थासु विकृतिषु बहुलमनुष्ठानात्। निमित्तत्वे तु संस्थाया तदभावे षोडशिस्थले नाग्निप्रसङ्गः।

अत एव 'वार्त्रघ्नी पौर्णमास्यामनूच्येते' इत्यत्र पौर्णमास्या निमित्तत्वात्, तदभावेऽमावास्यायां न वार्त्रघ्नीप्रसक्तिः। तस्मादुक्थ्यातिरात्रसंस्थयोर्निमित्तयोरग्निरप्राप्त एव विधेय इति न तद्वाक्ययोरव्याप्तिरिति।

"उक्थ्यादिस्पृक्फलानां क्रतुसमधिगतिं मन्वतामि"ति ३८ श्लोकेनोक्थ्यातिरात्रवाक्ययोर्नाव्याप्तिः। उक्थ्यातिरात्रसंस्थयोरग्निष्टोमसंस्थज्योतिष्टोमविकारत्वाभ्युपगमे दीक्षणीयादिवदग्नेरपि चोदकात्सम्भवत्प्राप्तिकतया तद्विषयतया खल्वव्याप्तिर्वक्तव्या। तदयुक्तम्। उक्थ्यातिरात्रसंस्थयोः क्रत्वोज्योतिष्टोमविकारत्वासिद्धेः। तथाहि—ज्योतिष्टोमस्तावत्सार्वकाम्यवाक्यात्सर्वफलार्थः। तत्सन्निधौ चाग्निष्टोमादीनि संस्थास्तोत्राण्युत्पन्नानि। तानि च प्रकरणाविशेषाद्यत्किंचित्फलार्थेऽपि ज्योतिष्टोमे प्राप्नुयुः। तत्र 'पशुकाम उक्थ्यं गृह्णीयात्, षोडशिना वीर्यकामस्स्तुवीत, अतिरात्रेण प्रजाकामं याजयेत्' इति श्रूयते। एभिश्च वाक्यैरुक्थ्यादिसंस्थक्रतुविषयत्वेनङ्गीकृतैरपि न संस्थाविशेषोपरक्तक्रतूनां फलविधानमङ्गीकर्तुं शक्यम्। अपूर्वविधिगौरवात्। येन विकृतित्वं स्यात्। किन्तु तानि तानि फलानि साधयतां प्रकृतक्रतावेव संस्थानां नियम इत्यङ्गीकर्तव्यम्।

'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः, स सौभरेण स्तुवीते'ति फलत्रयार्थतयावगतेन सौभरेण फले साध्यमाने शाखाभेदेनाम्नानादनियमप्राप्तानां

हीषादिनिधनानां 'हीषिति वृष्टिकामाय निधनं कुर्यादूर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाये'ति वाक्यैर्नियमोङ्गीक्रियत इति सौभराधिकरणेऽङ्गीकृतत्वात् । अन्यथा तदधिकरणविरोधात् । एवं च उक्थ्यातिरात्रसंस्थक्रत्वोरग्निष्टोमसंस्थ-ज्योतिष्टोमाद्भेद एव नास्ति, कथं क्रतोर्विकृतित्वम् । तस्मादग्नेः चोदकात्प्राप्त्य-सम्भवात् तत्राग्निविधायकयोर्वाक्ययोः कथमव्याप्तिरिति प्रतिपादितम् ।

अत्र नव्याः—अस्मिन्मतेऽग्निष्टोमसंस्थस्यैव प्रकृतित्वेन सार्वकाम्यवाक्यं तत्रैव फलसम्बन्धबोधकम्, न तु विकृतेरुक्थ्यादिसंस्थस्य । तथा च पशुकामादि-वाक्यानि क्रतुफलविधय इत्युक्थ्यसंस्थस्य विकृतित्वात् स्यादेवाव्याप्तिरित्याहुः ।

तदयुक्तम् । अग्निष्टोमसंस्थस्यैव प्रकृतित्वे सिद्धे हि स्यादव्याप्तिः । उक्तविधया पशुकामादिवाक्यानां लाघवात्संस्थानियमार्थत्वे सर्वसंस्थस्याप्ये-कत्वेन प्रकृति–विकृतत्वासिद्धौ कथमव्याप्तिरिति स्पष्टमेतत् । पशुकामादिवाक्येषू-क्थ्यादिशब्दानां संस्थामात्रवाचित्वे सम्भवति, न तद्विशिष्टक्रतुपर्यन्तत्वं युक्त-मिति, कुतः क्रतुफलसम्बन्धिविधित्वमपि, येन विकृतित्वप्रत्याशापि ।

नन्वगत्या पशुकामादिवाक्यगतोक्थ्यादिशब्दानां संस्थाविशिष्टक्रतुपरत्व-मङ्गीकर्तव्यम् । क्रतुमाश्रित्य संस्थायाः फले विधानायोगात् । यत्र हि गुणः कारकतामापाद्यते, तस्यैवाश्रयत्वादिति चेत् । संस्थास्तोत्रस्य क्रतुस्वरूपे कारकत्वा-भावेऽपि तत्साध्यापूर्वं प्रति कारकत्वसम्भवात्, अप्प्रणयने कारकमपि गोदोहनं प्रति दर्शपूर्णमासयोराश्रयत्वव्यवहारदर्शनेन स्वसम्बन्धिकारकत्वेनाप्याश्रयत्वे विरोधाभावात् ।

वस्तुतस्तु कारकं प्रत्येवाश्रयत्वमिति न नियमः, प्रमाणाभावात् । "समेषु कर्मयुक्तं स्यादि" ( २-२-१३ ) त्यधिकरणे शास्त्रदीपिकायामेव नावश्यं कारकतयैवाश्रयत्वम्, सम्बन्धान्तरेणाप्युपपत्तेः । तेन क्त्वाशब्देन क्रियान्तरसमानकर्तृकतया गम्यमानं रेवती-वारवन्तीयसम्बन्धकरणं फलाय विधीयते । किं तत्क्रियान्तरमित्यपेक्षायां सन्निधानाद्यागो लभ्यत इत्युक्त्यैक-वाक्यत्वसम्बन्धेनाप्याश्रयत्वं वारवन्तीयं प्रति यागस्य यद्यनुमतम्, तदा स्तोत्रं प्रति यागस्याप्याश्रयत्वाङ्गीकारे बाधकाभावाच्च ।

एवं चोक्थ्यादिसंस्थानां विकृतित्वासम्भवे किं सर्वसंस्थं ज्योतिष्टोमं प्रकृत्य दीक्षणीयादयो धर्माः, उताग्निष्टोमं प्रकृत्येत्यादिसंस्थाधिकरणभाष्यन्तु ज्योतिष्टोमस्यैव अग्निष्टोमसंस्थस्य, उक्थ्यादिसंस्थस्य च सामानविध्यविचारपरं न ग्राह्यम्, किन्तु ज्योतिष्टोमेन सहोक्थ्यादिकाम्यसंस्थानां सामानविध्यपरं नेतव्यम् । अन्यथा 'यत्र यत्र गुणकामाः' इत्यादितत्सिद्धान्तभाष्यविरोधादिति मूल एवोक्तम् ।

न च उपक्रमभाष्यानुरोधात्सिद्धान्तभाष्यमेवान्यथा नेयमिति वाच्यम्। एवं हि सौभराधिकरणविरोधस्य दर्शितत्वात्।

किं च 'अयनेषु चोदनान्तरं संज्ञोपबन्धादि'( २-३-४ )त्यत्र निर्णीतं दाक्षायणयज्ञादिवाक्यानां गुणफलार्थत्वमपि विरुध्येत। तस्मादुक्थ्यातिरात्र-वाक्ययोर्नाव्याप्तिः। नापि द्विरात्रादिवाक्येष्वव्याप्तिः। द्विरात्रादिष्वग्निष्टोमादि-संस्थासत्त्वेन तेषु प्रकृति-विकृतिसाधारणाग्निष्टोमादिवाक्यैरेवाग्नेर्गुणकामानां च सम्पन्नतया तेषां गुणकामप्राप्त्यर्थाग्निविधिरूपत्वाभावादनुवादमात्ररूपत्वाच्च।

न चात्राग्निष्टोमादिवाक्यैः प्रकृत्यग्निष्टोमादीनामेव ग्रहणमस्तु, माभू-द्विरात्रादिवाक्यानां स्तावकतयानर्थकप्रायत्वमिति वाच्यम्। एवमप्यग्निष्टोमादि-शब्दानां प्रकृति-विकृतिसाधारणानां प्रकृतिमात्रपरत्वमिति श्रुतिसंकोच-स्यायुक्तत्वात्, द्विरात्रादिवाक्यानां द्विरात्रादिष्वग्निनियमनार्थतयाऽऽनर्थक्या-भावस्यापि 'वाचस्त्वग्नेर्द्विरात्रे'त्यादि३७ श्लोकेनोपपादितत्वात्।

अथाग्निष्टोमादिवाक्यानां प्रकृति—विकृतिसाधारण्याङ्गीकारेऽप्युपदिष्ट-संस्थाकप्रकृति-विकृतिमात्रपरत्वं न्याय्यम्। उपदिष्टसंस्थानामेव झटित्युपस्थित-त्वेनाग्निष्टोमादिपदविषयत्वौचित्यात् 'यदाहवनीये जुहोती'त्यादौ जुहोतेर्विकृति-साधारणस्याप्युपदिष्टहोममात्रपरत्वाङ्गीकारात्। एवं चानुपदिष्टसंस्थाक-द्विरात्रादिषु गुणकामप्राप्त्यर्थमग्निविधित्वेनाङ्गीकार्येषु द्विरात्रादिवाक्येष्वव्याप्तिः स्यादेवेति चेत्। मैवम्। गुणकामप्रवृत्तेरतिदिष्टाग्न्याश्रयणेनापि सम्भवे आति-देशिकसंस्थेष्वपि द्विरात्रादिष्वग्निविधेर्व्यर्थत्वे द्विरात्रादिवाक्यानामग्निविधि-त्वाभावेनाव्याप्तेरनवकाश एव।

कथमतिदिष्टाश्रयणेन गुणकामप्रवृत्तिरिति चेत्। न। अनारभ्याधीतस्य शुद्धस्यैवाग्नेराश्रयत्वेन तस्यातिदिष्टस्याप्याश्रयत्वे वैगुण्याभावेन तदाश्रितगुणकाम-प्रवृत्तौ बाधकाभावात्। न हि किंचित्क्रत्वपूर्वान्वयित्वेनावगतोऽग्निः'श्येनचितं चिन्वीत स्वर्गकामः' इत्यादिवाक्येष्वाश्रयत्वेन स्वीक्रियते, येन तदपूर्वव्यक्ति-विशेषार्थोऽग्निर्विकृतौ नास्तीति वैगुण्यात्तदाश्रयणेन श्येनाकृत्यादिर्न प्रवर्तेत। सौर्याग्निप्रणयन इव गोदोहनम्। तस्माद्द्विरात्रादिवाक्यानां विधायकत्वान्न तेष्वप्य-व्याप्तिशंकावकाशः।

अत्र नव्याः—श्येनाकृत्यादिगुणं प्रति न शुद्धोऽग्निराश्रयः। "य एवं विद्वानग्निं चिनुत" इत्युत्पत्तिवाक्येनोपदिष्टहोमरूपक्रत्वपूर्वायाहवनीय-संस्कारतया चयनस्यावगततया चयननिर्वर्त्यस्थण्डिलस्यापि तादृशापूर्वार्थाहवनीय-सम्बन्धित्वेनावगतत्वात्। तथा चानुपदिष्टहोमरूपेषु द्विरात्रादिष्वतिदिष्टस्याग्नेर्गुण-

कामाश्रयत्वायोगेन तदर्थं तेष्वग्निविधेरावश्यकत्वात्तत्र स्यादव्याप्तिरिति वदन्ति । तदयुक्तम् । अग्नेरपूर्वोपरक्तस्याश्रयत्वं तद्रूपेणावगतत्वाद्वा, शुद्धस्याश्रयभवनानर्हत्वाद्वा ? । नाद्यः 'श्येनचितं चिन्वीत स्वर्गकामः' इति वाक्यलक्षणायां प्रमाणाभावेन तद्रूपेणापरामृश्यैव धातुना शुद्धाग्नेरेवाश्रयीकरणात् ।

न द्वितीयः—स्वनिर्वर्तकतयान्तरंगभूतचयनक्रियोपरक्तस्यैवाग्नेराश्रयत्वे सम्भवत्यनन्तरङ्गः-क्रत्वपूर्वोपरागानपेक्षणात्प्रकरणानुसन्धानलभ्यस्थण्डिलापेक्षया झटिति धातूपस्थापितचयनस्यैव गुणकामाश्रयत्वसम्भवे स्वतस्तस्य क्रियारूपत्वेन क्रियान्तरानुरागानपेक्षणाच्च ।

न च श्येनाकृत्यादिगुणानां स्थण्डिल एवाश्रयः, न चयनक्रियेति वाच्यम् । चयनसाध्यतया श्येनाकृतेरपि तत्सम्बन्धिन्यास्तदाश्रयत्वे बाधकाभावात् ।

अस्तु वा गुणकामवाक्यैरुत्पत्तिवाक्यावगतरूपस्यैवाग्नेराश्रयतया स्वीकारः । तथापि कथमुत्पत्तिवाक्यादुपदिष्टहोमरूपक्रत्वपूर्वार्थाहवनीयसंस्कारकचयननिर्वर्त्यस्थण्डिलत्वेनावगतिः ? । उत्पत्तिवाक्ये हि लौकिकाग्निसाधारणाग्निरूपेणैवाग्नेरवगतिः ।

न च तत्र द्वितीयया चयनं प्रति संस्कार्यताप्रतीतेर्लौकिके तदयोगादाहवनीयत्वेनैवाग्नेर्भानमिति वाच्यम् । 'पशुकामश्चिन्वीते'ति वाक्यात्फलार्थस्य चयनस्यावघातादिवदपूर्वार्थतावगत्यनवश्यंभावात्प्राकरणिकानेकवाक्यबललभ्यस्याहवनीयत्वरूपस्योत्पत्तिवाक्यगतेनाग्निशब्देनाग्नीषोमीयोत्पत्तिवाक्यगतपशुशब्देनेव हृदयादित्वस्यालक्षणीयत्वाच्च । लक्षणीयत्वेऽपि वा गार्हपत्यादिसाधारणस्य "वसन्ते ब्राह्मणोऽग्नीनादधीते"ति तदुत्पत्तिवाक्यावगतस्याग्नित्वरूपस्यैव द्रागवगतस्य लक्षणीयत्वे आधानीयप्रकरणानुसन्धानापेक्षाहवनीयरूपस्य लक्षणानौचित्यात् । गार्हपत्यादिरूपस्यापि लक्ष्यत्वापत्तेश्च । तथाचाधाननिष्पन्नाग्न्यर्थचयनस्य द्विरात्रादिष्वनुपदिष्टहोमेष्वपि सद्भावाद्व्यर्थ एव द्विरात्रादिविधिः । अस्तु वा आहवनीयस्यैव लक्ष्यत्वमिति । अथापि तद्गतोपदिष्टहोमापूर्वार्थत्वेनैव लक्ष्यत्वमित्यत्र मानाभावः । 'यदाहवनीये जुहोती'ति वाक्यप्रवृत्तेः प्रागेव 'अर्धोदिते सूर्ये आहवनीयमादधाती"ति वाक्यावगताहवनीत्वाकारस्यैव लक्ष्यतौचित्यात् । अथाप्यपूर्वार्थत्वभानमावश्यकम् । तथापि होमापूर्वार्थत्वेनैवाहवनीयाग्निं चिन्वीत इति वाक्यीयाग्निशब्देन लक्ष्यताम् । तावतैव भवदपेक्षितसंस्कार्यत्वप्रतीतिनिर्वाहात् । न तूपदिष्टत्वहोमविशेषणं प्रमाणाभावात्, गौरवाच्च ।

किञ्चोपदिष्टहोमापूर्वार्थाहवनीयार्थस्यैव स्थण्डिलाग्नेरुत्पत्तिवाक्यावगतस्य गुणकामाश्रयत्वे द्विरात्रादिषूपदिष्टहोमशून्येषु द्विरात्रादिवाक्यैरग्निविध्यङ्गी-

कारेऽपि तत्र तमाश्रित्य गुणकामा न प्रवर्तेरन्। द्विरात्रादिवाक्यगततच्छब्देनापि तादृशापूर्वार्थत्वेनैवाग्नेर्बोधनीयत्वे मानाभावेन, अग्नीत्वाकारेणैव बोधनात्। तादृशाकारेण बोधनस्य विधेयपराग्निशब्देन लक्षणाभीत्या कर्तुमशक्यत्वाच्च। तथा च गुणकामवाक्यप्रतिपन्नाश्रयरूपाभावेऽतिदिष्टाश्रयस्थल इवोपदिष्टस्थलेऽप्युपदिष्टहोमापूर्वार्थाहवनीयार्थत्वरूपाश्रयगुणवैकल्याविशेषात्।

ननु द्विरात्रादिवाक्यगततच्छब्देनापि तादृशाकारेणैवाग्निरूपस्थाप्यते। तथा चाश्रयगुणवैकल्याभावात् भविष्यति गुणकामप्रवृत्तिरिति चेत्। न। भविष्यति गुणकामप्रवृत्तिः। कथम्? व्याघातात्। इदं हि नोपदिष्टहोमवति द्विरात्रादावग्निविध्यर्थं वाक्यम्, व्यर्थत्वात्। गुणकामप्रवृत्तेरेतद्विधिमन्तरेणापि तत्र सिद्धत्वात्। किन्त्वनुपदिष्टहोमेष्विति वाच्यम्। तत्रोपदिष्टहोमार्थाहवनीयार्थमग्निं कुर्यादिति व्याहन्यते।

अथोपदिष्टहोमार्थोऽग्निः स्वरसत एव द्विरात्रादिविधिसाफल्याय एतद्विधिविहितोऽप्यग्निराश्रयोऽस्तु गुणकामानामिति चेत्। न। श्येनाकृत्यादिविधिवैरूप्यापत्तेः। उपदिष्टहोमार्थमग्निमाश्रित्य श्येनाकृत्या फलं कुर्यादन्यादृशं चाश्रित्येति।

अथ श्येनाकृतिवाक्येऽग्नित्वेनैवाग्नेराश्रयत्वम्, नापूर्वीयत्वेन, न वा द्विरात्रादिवाक्यबोध्यत्वेन, येन वैरूप्यं स्यात्। किन्तु सन्निधानादुत्पत्तिवाक्यावगतरूपावच्छिन्नो द्विरात्रादिवाक्यबोध्योऽप्याश्रयो भवतीति। न षोडश्यादिषु गुणकामातिप्रसक्तिरपीति चेत्। एवं तर्हि प्रकरणानुसन्धानात्पूर्वमग्न्युत्पत्तिवाक्यावगतः शुद्धोऽप्यग्निराश्रयः स्यादेवेति, यत्र यत्राग्निरुपदेशादतिदेशाद्वा, तत्र गुणकामाः प्राप्नुयुरेवेति व्यर्थमेव द्विरात्रादिवाक्यैरग्निविधानम्।

न चैवं वैयर्थ्यमेव दोषस्तेषां वाक्यानाम्। "वाचस्त्वग्नेरि"ति श्लोकेन फलस्यं दर्शितत्वात्। तस्मात्कथं द्विरात्रादिविधिष्वव्याप्तिः।

यत्तु—उत्पन्नस्य फलाकाङ्क्षोत्कट्यानुसारात्प्रथममग्निष्टोमादिवाक्यैरग्निः क्रतुना संबध्यते। पश्चात्तदपूर्वार्थ एव सन्नाश्रयत्वेनेति। तदपि न। एवमपि साक्षात्फलेन "पशुकामश्चिन्वीते"ति वाक्येन सम्बन्धः। तावतैव निराकांक्षो यस्यां दशायामग्निष्टोमादिवाक्यैरुत्थापिताकाङ्क्षः सम्बध्यते, तदैवोत्थापिताकांक्षाविशेषात् श्येनादिवाक्येष्वाश्रयत्वेनापि सम्बध्येतेति नापूर्वार्थस्यैवाश्रयत्वम्।

किञ्च सत्यमुत्पन्नस्य फलाकांक्षोत्कटेति, तथापि 'श्येनचितमि'तिवाक्ये धातुनाऽनूद्यमानस्य न फलान्वयानन्तर्यनियमः। शब्दशक्तिबलादुपस्थाप्यमानस्य फलान्वयः, क्रमानपेक्षणात्।

यद्येवं प्रणयनमपि शुद्धमेव गोदोहनाश्रयः स्यादिति चेत् । स्यादेव, यदि दर्शपूर्णमासप्रकरणे गोदोहनवाक्यं नाम्नायेत । तद्धि स्वस्य प्रकरणपाठसाफल्याय शुद्धमुल्लंघ्य, तदपूर्वीयमेवाप्प्रणयनमाकांक्षतीति वैषम्यम् ।

यदपि सन्निधानादग्नेर्गुणफलविध्याश्रयत्वेनान्वयः । स "चाग्निष्टोमेनानुयजन्ती"ति वाचनिकविनियोगापेक्षया विलम्बितः । अतः क्रत्वपूर्वान्वितस्यैवाग्नेर्गुणफलविध्याश्रयत्वमिति ।

तदपि न । गुणकामवाक्येऽपि त्वग्नेर्वाक्येनैवान्वयः, "चिन्वीते"ति धातुसमभिव्याहारात् । सन्निधानात्त्वाश्रयसम्बन्धस्यापि बोधने वाक्यभेदः स्यादिति, दूषणापनयने व्याप्रियते । न ह्यनुवादसमर्पकमानप्रवृत्त्यनन्तरमेवानुवादप्रवृत्तिः, "सौर्यं चरुं निर्वपेदि"त्यादौ निर्वपतेश्चोदकानन्तरप्रवृत्तिकत्वापत्तेः । भवतु पश्चात्प्रवृत्तिः गुणकामवाक्यस्य, तथाप्यपूर्वार्थस्यैवाग्नेरनुवाद्यत्वमित्यत्रास्ति प्रमाणमित्यप्ययुक्तम् ।

यदुक्तमस्मद्गुरुचरणास्त्वित्यादिना सिद्धरूपस्याग्नेराश्रयत्वायोगादग्निष्टोमादिवाक्यैः क्रत्वन्वयस्यावश्यकत्वे द्विरात्रादिषु गुणकामप्रवृत्त्यर्थं द्विरात्रादिवाक्यैरग्निविधिरावश्यक एवेति, स्यादेव तत्राव्याप्तिरिति ।

तदसारम्—अन्तरंगचयनानुरक्तस्य स्थण्डिलाग्नेराश्रयत्वे क्रत्वन्वयानपेक्षणात् । चयनक्रियाया एव गुणकामाश्रयत्वेऽपि बाधकाभाव इत्यप्युक्तत्वाच्च । एवं च द्विरात्रादिवाक्यानां सन्निहितगुणकामप्रवृत्तिरूपफलासम्भवे द्विरात्रादिचोदकपर्यालोचनालभ्यस्याप्यग्निनियमनस्यैव फलत्वमिति ध्येयम् ।

इति श्रीमद्वल्लबोम्मकुलार्णवपूर्वचन्द्रचिन्नमाम्बागर्भशुक्तिमुक्ताफलब्रह्मण्यविरुदांकितचोक्कनाथभूपालहृदयकुहरविहरमाणसाम्बशिवप्रेरितेन-चिन्नाप्पय्यदीक्षितेन विरचितायां दुरूहशिक्षायामग्निविध्याक्षेपसमर्थनभङ्गो नाम चतुर्थस्तरङ्गः ।



## अथापूर्वविधिलक्षणाक्षेपसमुद्धारभङ्गो नाम पञ्चमस्तरङ्गः ।

अथ "विधिरत्यन्तमप्राप्ते" इत्यपूर्वविधिलक्षणमयुक्तम् । अप्राप्ते इत्यत्र हि विषयसप्तमी चेत् । अत्यन्ताप्राप्तविषयको विधिरपूर्वविधिरिति लक्षणं स्यात् । तच्चायुक्तम्, अग्न्यतिग्राह्यादिविध्यव्यापनात् । अप्राप्त इति सतिसप्तमी चेत् । यस्मिन् कस्मिंश्चिदप्राप्ते तत्प्राप्तिफलको विधिरपूर्वविधिरिति वा स्यात् । यस्मिन् कस्मिंश्चित्स्वोद्देश्यमप्राप्ते विधिरेवापूर्वविधिरिति वा स्यात् ।

तत्र तत्प्राप्तिफलकत्वाविवक्षायां "व्रीहीनवहन्ती"त्यादिविध्यतिव्याप्तिः । प्राकृतविधेश्चोदकापेक्षवैकृताज्यभागादिनिषेधादौ पश्वादौ स्वोद्देश्यमप्राप्त एवावहननविधिप्रवृत्तेः । तस्मात्प्राप्तिफलकत्वविवक्षाऽऽवश्यकी । तथाप्यग्रताविधिष्वव्याप्तिः । अस्ति हि द्वादशाहे "ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रमि"ति अग्रताविधिः । तत्राद्ययोरह्नोः रथन्तर-बृहत्सामत्वात् । "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रानि"ति प्रकृतौ ज्योतिष्टोमे नैमित्तकविधिसत्त्वात् । ततश्चोदकादेव द्वादशाहान्तर्गतयोरह्नोर्विधित्सिताग्रताप्राप्तिसत्वादव्याप्तिः । विधिप्रयोजनं त्वग्रतयोरनैमित्तिकत्वम् । अत एव द्वादशाहविकारे गर्गत्रिरात्रे द्वितीयमहर्वामदेव्यपृष्ठम् । न तु बृहत्पृष्ठम् । अथापि तत्र श्रूयमाणे ऐन्द्रवायवाग्रताविधौ चाव्याप्तिः । विधित्सिताग्रतायाः स्वोद्देश्यं प्राप्तत्वात्, विधिफलं त्वग्रताया गावामयनिकपरमापूर्वार्थत्वलाभः । चोदकाद्धि तत्तदहरपूर्वप्रयुक्तैवाग्रता स्यादिति ।

ननु यद्धर्मावच्छिन्नोद्देश्ये यस्यात्यन्ताप्राप्तिः, तस्य तद्धर्मावच्छिन्ने तत्र प्राप्त्यर्थो विधिरपूर्वविधिरिति सतिसप्तमी पक्षे विवक्षितम् । अतो नाग्रताविध्योरव्याप्तिः । द्वादशाहिकविधेरहरपूर्वार्थत्वेनाप्राप्ताग्रताप्रापकत्वात्, गावामयनिकविधेश्च परमापूर्वार्थत्वेनाप्राप्ताग्रताप्राप्तिफलकत्वादिति चेत् । मैवम् । 'व्रीहीनवहन्ती'त्यादावप्यपूर्वीयव्रीह्यर्थतया प्राप्तावघातप्रापकत्वाद्व्रीहिस्वरूपार्थत्वेऽवघातस्यानर्थक्यं मा भूदिति, व्रीहिपदेनापूर्वीयव्रीहिलक्षकेणावघातं प्रत्यपूर्वीयत्वेनैवोद्देश्यसमर्पणात् । अयमर्थ आकर एव श्रुति-सूत्रोपपत्तिभिः स्पष्टीभूतः । तदस्माभिः संक्षेपेण प्रदर्शितः ।

अत्राह – नेयमव्याप्तिरवघातविधौ । यतः—

'न व्रीह्यर्थोऽवघातोयमानर्थक्यप्रसङ्गतः ।
नाप्यपूर्वीयमात्रार्थः स्रुक्स्रुवातिसङ्गतः ॥
किन्तु तण्डुलनिर्वृत्तिप्रणाड्यापूर्वसाधनम् ।
लक्ष्यते व्रीहिशब्देन तदर्थं इति निश्चयः ॥
तत्र तण्डुलनिर्वृत्तावुद्देश्यस्य विशेषणे ।
प्रस्थपेषणवत्यैष पक्षप्राप्तो नियम्यते ॥
तत्रापूर्वांशसद्भावात्तादर्थ्यस्यापि सत्तया ।
आनर्थक्यं च नास्त्यस्य व्रीहिमात्रार्थता कुत इति ॥

अत्र ब्रूमः । यद्युद्देश्यतावच्छेदककोटौ पाक्षिकत्वेनापि नियमविधित्वम्, तदाग्निविध्यतिव्याप्तिः । "अथाऽतोऽग्निमग्निष्टोमेनानुयजन्ती"त्यत्र हि चयननिष्पादितस्थण्डिलेऽग्निनिधानानन्तरं तस्मिन्नग्नावग्निष्टोमादिभिर्यजेतेत्यर्थः । क्वचिन्निहितेऽग्नावग्निष्टोमादियागस्य प्राप्ततया तावदंशानुवादेनाग्निरूपस्थण्डिलस्यैव विधिः । तथा च विधेयस्य स्थण्डिलस्योद्देश्यकोटिप्रविष्टाग्निनिधानेऽधिकरणत्वेन पक्षप्राप्तत्वात् ।

किञ्चैवमवहन्त्यादौ कथञ्चिन्नियमविधित्वोपपादनेऽप्यपूर्वविधिलक्षणातिव्याप्तेरनिराकरणादुद्देश्यतावच्छेदकावच्छिन्नेऽवघातस्यात्यन्ताप्राप्तत्वात् ।

न चावहननविधेरुभयरूपत्वमपीति, नातिव्याप्तिर्दोष इति वाच्यम् । यदि हि हन्तेः प्रथमोपस्थितमपि वैतुष्यरूपफलमतन्त्रीकृत्य, अपूर्वीयलक्षणामस्वीकृत्य, वाक्यप्रवृत्तिमङ्गीकरोषि, तदा तस्यापूर्वं फलमिति निश्चितमेव । तथा च हन्तेरपूर्वार्थस्य विदलननिवृत्तिवदानुषङ्गिकफलमेव वैतुष्यमपि स्यान्न विधिफलमिति, तत्र पक्षप्राप्तेरप्रयोजकत्वेन नियमविधित्वमेवोच्छिद्येत । अत एवंरूपापूर्वविधित्वमनिष्टमेव । वस्तुतस्तु हविःप्रकृतित्वेनैव लक्षणा स्वसम्मता, न तूक्तविधया । तथाचात्र स्वव्याघात इत्यपि द्रष्टव्यम् ।

एवं "खादिरो यूपो भवती"ति नियमविधौ चातिव्याप्तिः । छेदनादिजन्यादृष्टकूटविशिष्टस्यैव यूपशब्दार्थत्वात् । तत्र च खदिरस्यात्यन्ताप्राप्तेरिति, तृतीयश्लोकोक्तातिव्याप्तिरप्ययुक्ता । तत्र संस्काराश्रयद्रव्यस्यैव प्रकृतिद्रव्यापेक्षा । तदनुसारात्तत्रैव पक्षप्राप्तः खदिरो नियम्यत इति नातिव्याप्तिः ।

किञ्च "यूपं छिनत्ती"ति संस्कारविधिप्रवृत्त्यनन्तरं खदिरविधिप्रवृत्तिः । छेदनविधेश्च--वृक्षं छिन्द्याद्यूपीकर्तुमित्यर्थः । यूपशब्दार्थस्य प्रागज्ञानात् । एवञ्च वृक्षस्य प्रकृतिद्रव्यापेक्षायां तदनुसारेण खदिरवाक्ये यूपशब्देन वृक्षो लक्षणीय इति शक्योद्देश्यपुरस्कारेण नेयमतिव्याप्तिरिति, हन्त्यतिव्याप्त्यपेक्षया न कश्चिद्विशेष इत्युक्तम् ।

अयुक्तञ्च। तथा हि—न ताव'द्यूपं छिनत्ती''त्यस्य वृक्षं छिन्द्याद्यूपीकर्तुमित्यर्थः। यथा हि यूपं सन्तं छिन्द्यादित्ययुक्तम्, यूपस्याज्ञानादिति, तथैव यूपीकर्तुमित्यप्ययुक्तमेव। किन्तु छेदनेन यूपं कुर्यादिति, आधानेनाहवनीयमितिवत्तत्र वृक्षस्य छेदनेनेति वा, पटस्य छेदनेनेति वा, किमपि न ज्ञायते यतः प्रकृत्याकांक्षा स्यात्।

एवं तक्षणादिवाक्यानामपि 'तक्षणेन यूपं कुर्यादि'त्यादिप्रकारेणैवार्थः। एवं च विनिगमनाविरहाच्छेदन--तक्षणाष्टाश्रीकरणादिभिः सर्वैरेव व्यापारैर्विषयीकृत एकोऽपूर्वो वृक्षो यूपशब्दार्थ इति न ज्ञायते। तत्र 'खादिरो यूपो भवती'ति वाक्ये यूपशब्देन वृक्षमात्रं यदि लक्ष्येत, तदा लक्षणेति वाचोयुक्तिरप्ययुक्ता। वृक्षस्यैव शक्यत्वात्।

नापि तत्र भागत्यागलक्षणेति वाच्यम्। "भूतले घटस्तिष्ठती"त्यादाविव विशेषणरूपभागत्यागे लक्षणायोगात्स्रुगादिषु खदिरत्वप्रसंगश्च। यदि छिद्यमानवृक्षत्वं लक्ष्येत, तदा विशिष्टोद्देशोऽधिकः, शाखायामतिप्रसंगश्च। तस्याश्छिद्यमानत्वम्, अच्छिद्यमानत्वं वा विशेषणमित्यत्र न प्रमाणमपि। अष्टाश्रीक्रियमाणत्वादेरपि सन्निधानाविशेषेणोपस्थिततया विशेषणत्वौचित्यात्।

किञ्चानियमेन छेदन–प्रोक्षणादेर्यस्य कस्यापि विशेषणत्वे प्रोक्ष्यमाणयुगादावष्टाश्रीक्रियमाणचषालादौ छिद्यमानशाखायां चातिप्रसङ्गः।

अथ विनिगमनाविरहात्सर्वं विशेषणमस्तु, न हि तर्हि कश्चिदतिप्रसङ्गः। लक्षणा तावत् दूरोज्झिता। विशिष्टकाष्ठस्यैव यूपपदशक्यत्वात्।

तत्र च क्रमिकक्षणिकानेकक्रियाणां विशेषणत्वमिच्छता त्वयापि तावत्क्रियाजन्यतत्तदुपकारमुखेनैव तत्र तासां विशेषणत्वं वाच्यम्। तथा च तावत्क्रियाजन्योपकारविशिष्टस्यैव काष्ठविशेषस्य यूपशब्देनात्र प्रतिपादनावश्यम्भावे कथं न शक्यार्थपुरस्कारेणातिव्याप्तिकथनमेतत्।

यत्तु तस्य यूपशब्दार्थप्रविष्टकाष्ठीयाकांक्षानुसारात्तत्रैव प्रकृतिद्रव्यविधिरिति, नियमविधिरेवायमिति। तदयुक्तम्। प्रागुक्तरीत्योद्देश्यतावच्छेदकावच्छिन्नेऽपूर्वे यूपेऽत्यन्ताप्राप्तस्यैव खादिरस्य विधिरिति, तत्रातिव्याप्तितादवस्थ्यादस्तखण्डनभीत्यापूर्वीयलक्षणासिद्धान्तत्यागेऽप्यस्या अतिव्याप्तेर्वज्रलेपत्वात्।

उद्देश्यतावच्छेदककोटिप्रविष्टे कस्मिंश्चित्पदार्थे पक्षप्राप्त्या नियमविधित्वेऽग्निविध्यतिव्याप्तेरपि दर्शितत्वात्। "य एवं विद्वानग्निं चिनुते" इत्यत्र 'उपदिष्टहोमार्थाहवनीयं चयनेन संस्कुर्यादि'त्यर्थो युष्माभिरेव दर्शितः। तत्र "याग एव प्रक्षेपाधिको होमः" इत्युक्त्या यागस्यापि होमघटकत्वात्, यागे च

"समे यजेते"ति वाक्यात्समभूमित्वात्स्थण्डिलरूपाग्नेरपि पक्षप्राप्तत्वादुद्देश्यतावच्छेदकयागपदार्थे विधेयस्याग्नेः पक्षप्राप्तिरस्तीति, नियमविधित्वापत्तिश्च।

अथ खादिरवाक्येन यूपोत्पत्तिवाक्यावगतमेव यूपरूपमुद्दिश्य खादिरत्वं विधेयम्, प्रथमोपस्थितत्वात्, न वाक्यान्तरावगतम्। "यूपं छिनत्ती"ति चेत्तदुत्पत्तिवाक्यम्। अन्ये तस्यैव संस्कारविधयः। सर्वेषामुत्पत्तिवाक्यत्वे यूपभेदापत्तेरिति चेत्।

मैवम्। एवमपि भवदिष्टसिद्ध्यभावात्। छिद्यमानं मुख्यमेव प्रति खादिरत्वविधानापत्त्या लक्ष्यमाणं प्रति विध्यभावात्, शाखातिप्रसङ्गश्च दर्शित एव। विनिगमनाविरहात्सर्व एव विधयो यूपशब्दार्थगमका इत्यप्युक्तमेव।

यूपताघटकैकैकपदार्थोत्पत्तिवाक्यभेदेन तद्घटकानामेव मिथो भेदेऽपि तावत्संघातात्मकस्य यूपस्यैकैकस्मादनुत्पत्तेस्तावद्विशिष्टोत्पत्तिभेदाभावेन न यूपभेदप्रसक्तिरपीति। एवञ्च विषयसप्तमीपक्षे नाग्निविधावव्याप्तिः। द्विरात्रादिषु गुणकामप्रयोजकाकारेण चोदकादग्नेः प्राप्त्यभावादिति परास्तम्। अवघातस्याप्यपूर्वविधिता प्रयोजकापूर्वीयव्रीह्यर्थत्वेनाप्राप्तस्यैव विधेयतया "व्रीहीनवहन्ती"त्यादावतिव्याप्तेः।

'अव्याप्तिः पौर्णमास्यामपि यजनविधावत्र कल्पे प्रसर्पेदि'ति चतुर्थश्लोकेन रूपभेदविवक्षयापि दुष्परिहरा अव्याप्तिर्दर्शिता। एवं हि सा'तावनूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्नि'ति पुराकल्पसरूपोऽर्थवादः, अनेकवक्तृकत्वात्। अत्र वाक्ये श्रूयमाणानां द्रव्यादीनामन्यतः सम्भवत्प्राप्तिकत्वेऽपि काले विधिः कल्प्यते। कालविधौ हि सति 'य एवं विद्वान् पौर्णमासीं यजते, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति विद्वद्वाक्याधिकारवाक्यस्थपूर्णमासपदाभ्यामाहत्य, पूर्णमासीकालसम्बन्धावगमेन झटिति प्रवृत्तिनिमित्तावगत्या आग्नेयाग्नीषोमीययागवदुपांशुयाजस्यापि परामर्शात्फलसंबन्धसिद्ध्या प्राधान्यं सिध्यति। तदेवं पौर्णमास्यामुपांशुयाजः कर्तव्य इति कल्पितविधावव्याप्तिः। अत्रोद्देश्यकाले यागस्य "उपांशुयाजमन्तरा यजती"त्युत्पत्तिवाक्यादेव प्राप्तत्वात्। उत्पत्तिवाक्यस्य पौर्णमासीप्रकरणाम्नातत्वेन पूर्णमासीयान्तरालविषयत्वादिति।

अत्र नव्याः—उपांशुयाजोऽमावास्यायामपि स्यादन्तरालकालाविशेषादित्यमावास्याव्यावर्तनार्थः परिसंख्याविधिरेव, नापूर्वविधिरिति, न पौर्णमासीविधावव्याप्तिरिति वदन्ति।

तद्युक्तम्। उत्पत्तिवाक्यपर्यालोचनयाऽमावास्यासाधारण्येनोपांशुयाजस्याप्राप्तेः। उत्पत्तिवाक्यस्य पौर्णमासीप्रकरणाम्नानात्।

न चैतद्विध्यभावे उपांशुयाजस्य पौर्णमासीप्रकरणाम्नातत्वस्यैवासिद्धिः स्यादिति वाच्यम्। पौर्णमास्यामुपांशुयाजः कर्तव्य इति कल्पितः कालविधिः किलापूर्वविधिलक्ष्यत्वेनाभिमतः। न तु "तावब्रूतामग्नीषोमावि"त्यादिवाक्यम्। तस्य पुराकल्परूपार्थवादतयाभिमतस्य विधित्वेनासंग्राह्यत्वात्। तथा च कल्प्यविधेरभावेऽपि "तावब्रूतामि"त्यादिवाक्यमपि नास्तीति, क्त्वाचिन्ताया अकर्तव्यतया, तद्वाक्यस्य प्रसादादापततः पौर्णमासीप्रकरणस्य न कश्चिदन्तराय इति लक्षणीयस्य कल्प्यविधेरभावेऽप्युत्पत्तिवाक्यस्वरसत एवोपांशुयाजः पौर्णमास्यामेव स्यात्, नामावास्यायामिति नामावास्यात उपांशुयाजपरिसंख्यार्थः कालविधिः। किन्तु फलसम्बन्धार्थतयाऽपूर्वविधिरेवेति तत्राव्याप्तिरेव। न चैवं मूलविरोधः। मूले परिसंख्यात्वव्यवहारस्याभ्युपगममात्रत्वात्। "यद्यपि परिसंख्याविधिरि"त्यादिग्रन्थस्वारस्येन तथैव विभावनात्। किञ्च परिसंख्याविधित्वेऽप्यप्राप्तफलसम्बन्धप्रापकतयाऽपूर्वविधित्वस्यापीष्टतयाऽव्याप्तिरेव।

ननु नास्यापूर्वविधित्वं सम्भवति, फलसम्बन्धार्थत्वायोगात्। फलसम्बन्धो ह्युपांशुयाजस्याधिकारवाक्यविषयत्वे स्यात्। तच्च विद्वद्वाक्यविषयत्वे। विद्वद्वाक्यं तु यस्यैव कालसम्बन्धो झटित्यवगतः, तमेव विषयीकुर्वत्, आग्नेयाग्नीषोमीयावेव विषयीकुर्यात्। "यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतः" इत्यादिनिरपेक्षोत्पत्तिवाक्यावगतकालसम्बन्धत्वान्नोपांशुयाजमपि। उपांशुयाजस्य "तावब्रूतामि"त्यादिवाक्यान्तरप्रकरणसापेक्षोत्पत्तिवाक्यावगतकालसम्बन्धत्वादिति चेत्। न। य एव यागोऽवगम्यमानः कालविशिष्टतया प्रतीयते, स एव विद्वद्वाक्यविषयः सात्ववगतिर्यद्यवगमकवाक्यस्य परप्रकरणाधीतत्वात् किञ्चिद्विलम्बेन भवति। तावता न कश्चिद्दोषः। उत्पत्तिवाक्यार्थे परिनिष्ठितेऽपि तु यस्य कालसम्बन्धप्रतीतौ विलम्बः, तस्यैव प्रयाजादिवद्वाक्याविषयत्वादुत्पत्तिवाक्यादर्थावगतावेव शैघ्र्य-मान्द्ययोर्विद्वद्वाक्यविषयत्वाविषयत्वयोरप्रयोजकत्वात्। अन्यथा "ऐन्द्रं दध्यमावास्याया-मि"ति स्वल्पपदघटिततया झटिति प्रवृत्तवाक्यावगतस्यैन्द्रयागस्यैव विद्वद्वाक्यविषयता स्यात्, न तु "यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती"ति बहुपदघटिततया चकारसूचितपदान्तरानुषङ्गसापेक्षतया च विलम्बितोपस्थितिकवाक्यादवगतस्याग्नेयस्य। तथा च विद्वद्वाक्यविषयत्वात्फलसम्बन्धसिद्ध्या भवत्येव "तावब्रूतामि"त्यपूर्वविधिः।

किञ्चानन्यार्थकालविधानसाफल्यायापि फलसम्बन्धः स्यादेव। न च पौर्णमासीविधेरनन्यप्रयोजनत्वमसिद्धम्, परिसंख्यार्थत्वादिति वाच्यम्। परिसंख्यार्थत्वासम्भवस्योक्तत्वात्।

नन्वथापि पौर्णमासीविधिर्न फलसम्बन्धार्थः, तस्यान्यतः सिद्धत्वात्। तथाहि-यदाग्नेयादिवाक्येषु द्रव्यदेवतामात्रश्रवणेन यागानुमानकृतं विलम्बं सोढ्वा आग्नेयादीनां विद्वद्वाक्येन ग्रहणं यथा, तथैव वाक्यान्तरप्रकरणालोचनकृतविलम्बमपि सोढ्वा उपांशुयाजस्यापि ग्रहणसम्भवादिति चेत्। न। एवं हि प्रयाजादीनामपि पौर्णमास्यमावास्यासम्बन्धिनां प्राधान्यापत्तेः। यदि मतं शीघ्रावगतप्रवृत्तिनिमित्तानाग्नेयादीन् यागानेव विद्वद्वाक्यं विषयीकरोति, न प्रयाजादीनिति, तदा कालसम्बन्धितया धर्मिग्राहकमानसिद्धानाग्नेयादीनेव गृह्णीयात्। उपांशुयाजं तु वैशेषिककालविधिबलाद्गृह्णीयात्। विशेषविध्यभावान्न प्रयाजादिकं गृह्णीयात्। वैशेषिकविध्यभावे तु प्रकरणावगतकालसम्बन्धस्योपांशुयाजस्य प्रकारान्तरावगततत्सम्बन्धात्प्रयाजादेरविशेष एव। वस्तुतः—पौर्णमासीकाल एवोत्पत्तिवाक्यादन्तरालकालत्वेन प्रतीयते। वस्तुतः पौर्णमासीप्रकरणाम्नातत्वादित्येतत्तु विद्वद्वाक्यविषयतायामकिञ्चित्करमेव। विद्वद्वाक्यस्य यत्र प्रवृत्तिनिमित्तावगमः, तत्रैव प्रवृत्तेः।

यत्तु लिङ्गदर्शनादेव 'शिरो वा एतद्यज्ञस्य यदाग्नेय' इत्यादिरूपादुपांशुयाजस्य प्राधान्यसिद्धिरिति। तन्न। लिङ्गदर्शनस्य सति प्रमाणान्तरे तदनुग्राहकमात्रत्वेन स्वतः प्रमाणत्वाभावात्।

एतेन—उपांशुयाजस्यान्तरावाक्योत्पन्नत्वे उत्पत्तिवाक्यावगतपौर्णमासीकत्वाभावेन प्राधान्यासिद्ध्यापत्त्या तदर्थं 'तावब्रूतामि'त्यादिवाक्यमेवोत्पत्तिपरमङ्गीकर्तव्यमित्यपास्तम्, प्रातिस्विकपौर्णमासीविधिबलात् 'शिरो वा' इत्यादिलिङ्गदर्शनाच्चान्तरावाक्योत्पन्नत्वेऽपि प्राधान्यस्योपपादितत्वादन्तरावाक्यसामञ्जस्याच्च।

न च तद्वाक्यमन्तरालविधिपरमिति वाच्यम्। यतः 'जामि वा एतद्यज्ञस्य क्रियते, यदन्वञ्चौ पुरोडाशौ' इत्युपक्रमे दर्शपूर्णमासप्रयोगस्य पुरोडाशद्वयनैरन्तर्यप्रयुक्तदोषकीर्तनेन येन पुरोडाशद्वयनैरन्तर्यं विहन्यते। तदेवात्र विधित्सितमित्यवगमात्। तादृशयाग एव विधेय इत्यङ्गीकारे स्वारस्यमस्ति। अन्तरालकालविधिरित्यंगीकारे तु न तथा स्वारस्यम्।

किञ्चैवमग्नीषोमविशिष्टस्यैवौपांशुयाजस्य प्राधान्यं स्यात्, न विष्णु-प्रजापतिविशिष्टस्य। उत्पत्तिवाक्येऽग्नीषोमयोरेव श्रवणात्, विष्णु-प्रजापत्योरश्रवणात्। तथा च 'शिरो वा' इत्यादिवाक्येनोपांशुयाजमात्रस्य प्राधान्यमवगतं बाध्येत। तथा तामेव युक्तिं सूचयन् "प्राये वचनादि"ति सूत्रमप्युपरुध्येत।

न च तत्सूत्रमभ्युच्चययुक्तिपरत्वात् बाध्यतामपीति वाच्यम्। अबाधेन समर्थनसम्भवे बाधितार्थत्वस्वीकारायोगात्।

अपि चोत्पत्तिवाक्ये क्लृप्तया देवतया तद्दैवत्ययाज्यानुवाक्यायुगलमेव झटित्यन्वेति। ततश्च मन्त्रनिराकांक्षत्वाद्यागस्य विष्णु-प्रजापतियाज्यानुवाक्यायुगलं नान्वियात्।

न च तत्स्वाकांक्षाबलात्स्वक्रमपतितोपांशुयाजेऽन्वेतीति युक्तम्। तद्धि याज्यानुवाक्यायुगलं स्वप्रकाश्यदेवतान्वयं यागस्य कल्पयित्वा नान्वेति।

न च तद्देवतासम्बन्धोऽपि यागस्य कल्पयितुं शक्यः। उत्पत्तिवाक्य एव प्रथमावगताग्नीषोमसम्बन्धेन देवतान्तरनिराकांक्षत्वाद्यागस्य। तथा च तद्याज्याद्यन्वयाय "विष्णुरुपांशु यष्टव्योऽजामित्वाये"त्यादिवाक्यानां देवताविधायित्वेऽङ्गीकृते तु सिद्धान्तविरोधः। विष्ण्वादिवाक्यानामर्थवादत्वाङ्गीकारात्। तथाप्युत्पत्तिशिष्टाग्नीषोमाभ्यामुत्पन्नशिष्टविष्ण्वादिविकल्पोऽप्ययुक्तः।

न च सम्भवत्प्राप्तिकत्वात्तत्र तयोरविधानम्। किन्त्वनुवादमात्रमिति वाच्यम्। नित्यवच्छ्रुतयोः पाक्षिकीं सम्भवन्तीं प्राप्तिमपेक्ष्य, निरर्थकानुवादायोगात्। अन्यथा "सप्तदश वैश्यस्ये"त्यादावपि त्रैवर्णिकाधिकारिकयोर्दर्शपूर्णमासयोर्वैश्यस्यापि पाक्षिकी प्राप्तिरस्तीति कृत्वा वैश्यसाप्तदश्यसम्बन्धोऽपि निरर्थकमनूद्येतेति स्यात्। तथा "वैश्यो वैश्यस्तोमेने"त्याद्यपि द्रष्टव्यम्।

एवञ्च वैष्णवयाज्यादेः पूषानुमन्त्रणमन्त्रवदुत्कर्षोऽप्यानाय्यापद्येत। तथा "आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वाग्नीषोमीयो भवती"तिवचनेनानसोमयाजिनोऽग्नीषोमीयाभावे उपांशुयाज एव न स्यात्। अस्मिन्पक्षेऽन्यदैवत्यस्योपांशुयाजस्याभावात्।

अपि चान्तरावाक्यात्सम्भवत्प्राप्तिकोपांशुयाजविधित्वात्पौर्णमासीविधावव्याप्तिरपि तदवस्था।

न चान्तरावाक्योत्पन्नस्योपांशुयाजस्य विद्वद्वाक्यविषयताप्रयोजकपौर्णमास्युपरक्तत्वरूपाप्रतीतेर्नाव्याप्तिरिति वाच्यम्। "तावब्रूतामि"त्यादिनानुत्पन्नस्याप्यन्तरावाक्योत्पन्नस्योपांशुयाजस्याहत्य पौर्णमासीकालविधिनैव विद्वद्वाक्यविषयत्वस्याप्युपपत्तेरव्याप्तिरेव।

चतुर्थश्लोकोत्तरार्धेन 'द्वे आहवनीये जुहोती'तिविधावव्याप्तिरुक्ता, 'यदाहवनीये जुहोती'तिवाक्यप्राप्ताहवनीयविषयत्वात्। न चायमलक्ष्य इति वाच्यम्। 'चतस्रो गार्हपत्ये जुहोति, चतस्रोऽन्वाहार्यपचने' इति विहितापराग्निकहोमानामग्निहोत्रत्वापादनेन 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति स्वर्गसम्बन्धार्थतयाऽपूर्वविधित्वावश्यम्भावात्। एतद्विध्यभावे ह्यापराग्निकहोमानामग्निहोत्रात्कर्मान्तरत्वापातात्। प्राप्ताग्निहोत्रानुवादेन चतुष्ट्वसंख्या—गार्हपत्यान्वहार्यपचनान्यतररूपाधिकरणयोरनेकयोर्विधानायोगेन तावद्विशिष्टकर्मान्तरविधिपरत्वेनैवापराग्निकवाक्ययोरङ्गीकार्यत्वात्। 'द्वे आहवनीये जुहोती' तिविधिना द्वयोराहवनीयरूपाधिकरणनियमे तु 'द्वे आहवनीये जुहोति, चतस्रो गार्हपत्ये, चतस्रोऽन्वाहार्यपचने, दश सम्पद्यन्ते, दशाक्षरा विराट्, य एवं विद्वान् विराट्सम्पन्नमग्निहोत्रं जुहोती' ति विराट्सम्पत्तिवाक्येन दशधाभ्यसनीयस्याग्निहोत्रस्यावशिष्टानां होमाभ्यासानामपराग्निकवाक्याभ्यामधिकरणमात्रविधानं भविष्यति, 'समं स्यादश्रुतत्वादि'ति न्यायप्राप्तचतुष्ट्वानुवादसम्भवात्। तस्मादापराग्निकहोमानामप्राप्तफलसम्बन्धप्रापके 'द्वे आहवनीये' इति वाक्ये अव्याप्तिरिति।

अत्र वदन्ति—नात्राव्याप्तिः, अलक्ष्यत्वात्। आपराग्निकहोमानां फलसम्बन्धस्यान्यतः प्राप्तत्वात्। तथाहि—आपराग्निकहोमानामग्निहोत्रादन्यत्वेऽपि विराट्सम्पत्तिवाक्यस्थाग्निहोत्रशब्दस्य छत्रिवदजहल्लक्षणया तेषु प्रवृत्तेः, 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यधिकारवाक्यस्थाग्निहोत्रपदस्याप्यापराग्निकसाधारण्ये तेषां फलसम्बन्धसम्भवात्। न चाधिकारवाक्याग्निहोत्रपदं मुख्याग्निहोत्रमात्रविषयमिति वाच्यम्। विराट्सम्पत्तिवाक्येऽग्निहोत्रशब्दस्यापराग्निकसाधारणानुवादसाफल्यायाधिकारवाक्याग्निहोत्रशब्दस्यापि तावत्साधारण्यावश्यंभावात्। अत एव 'वैश्वदेवेन यजेते'ति लाक्षणिकानुवादसाफल्यायैव 'प्राचीनप्रवणे वैश्वदेवेन यजेते''त्यत्र वैश्वदेवावैश्वदेवसमुदाये वैश्वदेवशब्दप्रवृत्तिः—इति।

अत्रोच्यते—एवं ह्याहवनीयहोमादापराग्निकहोमानां फलवत्त्वेऽपि भेद एव स्यात्। तथा च कुण्डपायिनामयनीये मासाग्निहोत्रे आहवनीये कर्तव्यमुख्याग्निहोत्रधर्मातिदेशेऽपि नापराग्निकाभ्यासादतिदेशः स्यात्। अस्मिन्पक्षे विराट्सम्पत्तिवाक्यप्राप्तदशाभ्यासस्याग्निहोत्राश्रितत्वेन, प्रचयशिष्टसंख्यामात्ररूपतया 'चतुर्दश पौर्णमास्यामाहुतयः' इत्यादिवत्कस्याप्यनङ्गत्वात्।

किञ्चामुख्यस्याप्यग्निहोत्रशब्दप्रवृत्तिविषयस्य फलसम्बन्धे कुण्डपायिनामयनगतस्यात्यग्निहोत्रस्य फलवत्त्वम्। ततश्च वाक्यात्फलसम्बन्धे प्रकरणेन

सत्राङ्गत्वमपि न स्यात्। एतेन मास-दर्शपूर्णमासादेरपि फलवत्त्वम्, सत्राङ्गत्वं च व्याख्यातम्।

अपि चाधिकारवाक्यगतमग्निहोत्रपदं मुख्यवृत्त्या झटिति आहवनीय-होमयोः फलसम्बन्धमप्रकाश्य पश्चाल्लक्षणया मुख्यानां फलं प्रकाशयेत्, न तु युगपद्वृत्तिद्वयविरोधात्। एकसार्थप्रविष्टत्व-दध्युपघातकत्वादिवत् पूर्वापराग्निक-होमरूपलक्ष्यमुख्यसाधारणैकधर्मानुपदर्शनाच्च मुख्यहोमयोः फलवत्त्वे तत एव सन्निधिश्रुतापराग्निकहोमानामपि तदङ्गताप्राप्त्या प्रयोजनाकाङ्क्षानिवृत्तिसम्भवे अधिकारवाक्यस्थाग्निहोत्रपदे अजहल्लक्षणाप्रयोजकानुपपत्त्याद्यभावाच्च।

कथं तर्हि वैश्वदेवपदलक्षितानां प्राचीनप्रवणतासम्बन्ध इति चेत्। न। "यद्विश्वेदेवाः समयजन्त, तद्वैश्वदेवस्य वैश्वदेवत्वमि"ति श्रुतिसिद्धेन विश्वदेव-यष्टृकत्वयोगेनाग्नेयादिषु वैश्वदेवशब्दो यौगिको न लाक्षणिक इति शास्त्रदीपि-कायामेव स्फुटत्वात्।

अथाग्निहोत्रशब्दोऽपि दशस्वपि होमेषु यौगिक एव "अग्ने गृहपते परि-षद्य जुषस्व स्वाहे"त्याद्यापराग्निकहोममन्त्रवशात्तेष्वपि अग्निदेवताकत्वसत्वात्। मैवम्। "अग्नेः पूर्वाहुतिरि"ति प्रत्यक्षश्रुताग्निसम्बन्धस्यैव होमस्याग्निहोत्रपद-वाच्यत्वात्। यथा कथंचिदग्निहोत्रप्रकरणे ऽग्निदेवताकत्वेनावगतानामग्नि-होत्रत्वे "एषा ते अग्निः समित्तया वर्धस्वे"ति मन्त्रकरणकहोमस्याप्यग्निदेवता-कस्याग्निहोत्रत्वेन फलवत्त्वे होमान्तराङ्गत्वं, कौण्डपायिनेऽतिदेशश्च न स्यात्।

न चैवं तवाप्युत्तराहुतेरापराग्निकहोमानां प्रातःकालीनपूर्वाहुतेश्चाग्नि-होत्रत्वाभावो दोषः स्यादिति वाच्यम्। एकस्यैव होमस्याधिकरणभेदेन, काल-भेदेन चाभ्यासाभ्युपगमेनाग्निहोत्रनामानपायात्। तस्माद्धोमभेदवादिनामाप-राग्निकहोमेष्वग्निहोत्रनामाप्रवृत्त्या फलसम्बन्धो न स्यादिति, तेषां फल-सम्बन्धाय "द्वे आहवनीये जुहोती"ति वाक्यं शरणीकरणीयमिति तस्या-पूर्वविधिलक्ष्यत्वात्, तत्राव्याप्तिर्वज्रलेपायते।

अपि च मास्तु, "द्वे आहवनीय" इत्यस्यापराग्निकफलार्थत्वेनापूर्व-विधित्वम्। अथापि आहवनीये कर्तव्यस्यैव होमस्याभ्यासान्तरावच्छेदेनाप्राप्ता-परराग्निरूपाधिकरणान्तरसम्बन्धार्थत्वेन तु स्यादेव। एतद्वाक्याभावे हि आप-राग्निकवाक्ययोः संख्याधिकरणविशिष्टकर्मान्तरपरतया आहवनीयकर्तव्याग्नि-होत्रस्याधिकरणान्तरपरत्वानुपपत्तेः। एतद्वाक्यसम्भवे तु आपराग्निक-वाक्याभ्यां संख्यानुवादपूर्वकमग्निहोत्रस्यैवाधिकरणप्रापकत्वोपपत्तेः।

एवमप्राप्तदशाभ्यासप्रापकत्वेनाप्यपूर्वविधित्वमस्य वाक्यस्य। एतदभावे हि "अग्ने पूर्वाहुतिः प्रजापतेरुत्तरे"ति वाक्यानुसारादाहवनीये द्वयोर्होमयोः कर्तव्यत्वे आपराग्निकहोमसहितेषु होमेषु प्रचयशिष्टं दशत्वमेव विराट्सम्पत्तिवाक्ये नानूद्येत, न त्वग्निहोत्रस्य दशधाऽभ्यासो विधीयते, तथा च "द्वे आहवनीय" इत्यस्याधिकरणप्रापकत्वेन वाऽभ्यासप्रापकत्वेन वाऽपूर्वविधित्वात् तत्राव्याप्तिः स्यादेव।

"वैश्वदेवीं साङ्ग्रहणीं निर्वपेत् ग्रामकामः" इत्यत्राप्यव्याप्तिः। अर्थवादादपि ग्रामफललाभसम्भवात्। न चेदमलक्ष्यमेवेति वाच्यम्। सन्निधिश्रुतामनहोमादेस्साङ्ग्रहण्यङ्गतापादकत्वेनापूर्वविधित्वात्। एतद्विध्यभावे ह्यर्थवादात् साङ्ग्रहणीफलकल्पने आमनहोमस्यापि स्वार्थवादात् फलकल्पना स्यादविशेषात्। तथा च फलवतोऽन्याङ्गता न स्यादामनहोमस्य। एतद्विधिसत्त्वे तु प्रत्यक्षविधिना साङ्ग्रहण्या झटिति फलवत्त्वे प्रकरणादामनहोमस्याङ्गता स्यात्। फलाकाङ्क्षाविरहाच्चार्थवादोऽपि गुणवाद एव स्यान्न फलकल्पक इति।

अत्राहुः—एतद्विध्यभावे पूर्वप्रकृतचक्षुष्कामेष्ट्यङ्गता स्यात्, प्रकरणात्, न त्वर्थवादेनापि फलवत्वं साङ्ग्रहण्याः। पूर्वोक्तरीत्या गुणवादत्वापत्तेः। तथा चाप्राप्तफलप्रापकत्वात्, अपूर्वविधिरेवेति।

तदयुक्तम्। एवं हि रात्रिसत्र-विश्वजिन्न्याययोरुच्छेदः स्यात्। रात्रिसत्र-विश्वजितोरपि स्वस्वपूर्वप्रकृतकर्मार्थतापत्तौ फलाकाङ्क्षाविरहेणार्थवादिकफलस्य, स्वर्गस्य वा कल्पनानर्हत्वात्।

यद्युच्येत रात्रिसत्रस्य वा विश्वजितो वा पूर्वकर्मापेक्षयाऽन्यूनत्वेन बहुफलाकाङ्क्षिण आहत्य वचनादिकमन्तरेण स्वेच्छाकल्पितानुवृत्तिकप्रकरणमात्रेण पराङ्गत्वकल्पनमनुपपन्नमिति, तर्हि साङ्ग्रहण्या अपि चक्षुष्कामेष्टिसमव्यापारवत्यास्तदङ्गत्वमयुक्तम्।

किञ्चाग्नेर्भ्राजस्वतः सूर्यस्य च चक्षुःप्रवृत्त्यपेक्षितालोकहेतुत्वेन चक्षुःसहकारित्वात्तैजसत्वेन तत्साजात्याच्च तद्दैवत्यस्य कर्मणश्चक्षुष्कामकर्तव्यत्वौचित्येऽपि तादृशहेतुविरहाद्वैश्वदेविकस्य कर्मणो न चक्षुष्कामकर्तव्यत्वौचित्यमस्ति, येन प्रकरणमनुवर्तयिष्यामः।

अपि च "ध्रुवोऽसि ध्रुवोऽहमि"त्यादिमन्त्रैर्व्यवहितैव साङ्ग्रहणी श्रूयते। तत्र "ध्रुवोऽसी"त्यादिमन्त्रश्रवणानन्तरं सजातेभ्य आधिक्यफले कर्मण्ययं मन्त्रो विनियोक्तुमुचित इति तादृशकर्माकांक्षैवोत्कटा जायते, मन्त्र-

लिङ्गस्य तादृशत्वात्। तथा च विजातीयाकाङ्क्षया आकांक्षालक्षणं चतुष्कामेष्टि-प्रकरणं तावद्विच्छिन्नमिति शक्यमवगन्तुम्। सन्निधिलक्षणं प्रकरणं विजातीय-व्यवहितायाः सांग्रहण्या अनाशंकनीयमेव। तथा सांग्रहण्या आर्थवादिकफल-कत्वेन तदङ्गत्वमामनहोमस्य न स्यादेवेति तदर्थमेव तस्यां फलश्रवणम्, न त्वत्य-न्ताप्राप्तग्रामफलप्राप्त्यर्थमिति स्यादेवाव्याप्तिः।

अथ लक्षणीयविधिविधेयस्य स्वोद्देश्यसम्बन्धित्वबोधकत्वेन सम्भा-वितसकलवैदिकमानाप्रवृत्तौ सत्यां विधेयस्य स्वोद्देश्यसम्बन्धित्वेन त्रिकाला-प्राप्तिरत्यन्ताप्राप्तिपदेन विवक्षिता। तथा च न सांग्रहणीविधावव्याप्तिः। प्रकृत-विध्युद्देशार्थवादयोरभावे ग्रामस्यात्यन्ताप्राप्तत्वात्। एवं वैकृताग्न्यग्रता पौर्णमासी-विधिष्वपि नाव्याप्तिः, चोदक-वैकृतविध्योरभावे अग्रताया अप्यप्राप्तत्वात् पौर्णमासीविध्यन्तरालविध्योरभावे उपांशुयाजस्यापि पौर्णमासीसम्बन्धाप्राप्ति-सत्त्वात्।

एवं 'दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेते' त्यनयोरपि नाव्याप्तिः। "एकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते सर्वेभ्यः कामेभ्यो दर्श-पूर्णमासौ, एकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते सर्वेभ्यः कामेभ्यो ज्योतिष्टोम" इति सर्वकामविध्योः प्रागुक्ताधिकारविध्योश्चाभावे ज्योतिष्टोमे स्वर्गसम्बन्धित्वस्याप्राप्तिसत्त्वात् नानाशाखोदिताग्निहोत्रादि-विधिष्वपि नाव्याप्तिः। सर्वशाखाविध्यभावेऽग्निहोत्रादेरप्यत्यन्ताप्राप्तेः। अत्र च सकलवैदिकमानपदेनोपदेशात्मकसकलवैदिकमानमेव विवक्षितम्। अतो न वैकृत "रथन्तराज्यभागनियम-परिसंख्ययोरव्याप्तिः, रन्थतरं पृष्ठं भवती"ति उपहव्यगतवैकृतविध्यभावे आज्यभागौ यजतीति गृहमेधीयविध्यभावेऽपि तत्तदतिदेशाभ्यामेव पृष्ठाज्यभागयोरनियमेन नियमेन च प्राप्तत्वात् इति चेत्। मैवम्।

वैकृते "औदुम्बरो यूपो भवती"ति नियमविधौ अतिव्याप्तेः। तत्रोपदेश-मात्राप्रवृत्तौ चोदकात् प्राकृतखादिरत्वादेरेव प्राप्त्या उदुम्बरताया अत्यन्तप्राप्तेः।

न च विधेयोद्देश्यसम्बन्धबोधकोपदेशत्वावच्छिन्नोपदेशाप्राप्तौ सत्यां यो धर्मः स्वोद्देश्यसम्बन्धित्वेन त्रिकालाप्राप्तस्तत्प्राप्तिफलको विधिरपूर्वविधिरिति विवक्षितम्। तथा च नोक्तातिव्याप्तिः। तस्योदुम्बरनियमफलकत्वेन अप्राप्तप्राप्ति-फलकत्वाभावात्। प्राप्तिफलकत्वे वा वाच्यम्, नोक्तातिव्याप्तिः। लक्ष्यत्वादेवेति

'सर्वेऽपि कारकविधयो नियमविधय, इति विशिष्य 'सर्वे द्रव्यविधयो नियमविधय' इति च सिद्धान्तप्रवादात्, नियमादृष्टकल्पनावश्यंभावाच्च नियमविधित्वेनावश्याभ्युपेयस्य "औदुम्बरो यूप" इति विधेरपूर्वविधिलक्ष्यत्वाभ्युपगमस्य साहसमात्रत्वात्। 'यदभावे तु यन्न स्यात्, तदेव खलु तत्फलमि'ति न्यायेनोक्तरीत्या उदुम्बरताप्राप्तिफलकस्यास्य विधेस्तदप्राप्तांशपरिपूरणफलकत्वायोगात्। एतद्विध्यभावे उदुम्बरतायाः पक्षप्राप्तौ हि तत्परिपूरणफलं स्यात्।

न च तदस्ति-एतद्विध्यभावे चोदकात् खादिरत्वादेरेव प्राप्तेरित्युक्तम्। कथं तर्हि तस्य नियमविधित्वम्? अप्राप्तांशपरिपूरणफलकत्वाभावादिति चेत्, तर्हि उपदेशमात्राप्रवृत्ताविति विवक्षां हित्वा, उपदेशातिदेशसाधारण्यायोद्देश्यसम्बन्धबोधकवैदिकमानाप्राप्ताविति पूर्वोक्तविवक्षैवाङ्गीकार्या। तथा सति उपदेशातिदेशोभयाप्रवृत्तौ पक्षप्राप्त्या उदुम्बरताविधेस्तत्परिपूरणफलकत्वेन नियमविधित्वसम्भवात्। न चैवमेवास्त्विति वाच्यम्। वस्तुतोऽतिदेशसत्वेन एतद्विध्यभावे खदिरत्वादेरेव प्राप्त्या उदुम्बरताया अत्यन्ताप्राप्तत्वेन एतद्विधेस्तत्प्राप्तिफलकत्वात्। पूर्वोक्तपृष्ठाज्यभागातिव्याप्तिप्रसंगाच्च। तस्मात् तत्प्राप्तिफलकत्वविवक्षायां वै कृतोदुम्बरताविधावतिव्याप्तिर्नापैति।

किञ्च प्राप्तिफलकत्वात् पौर्णमासीविधेः फलसम्बन्धाप्राप्त्यर्थत्वात्, साङ्ग्रहणीविधेश्चामनहोमाङ्गतार्थत्वात्। किंच पृष्ठाज्यभागविध्यतिव्याप्तिवारणाय उपदेशमानमात्राप्रवृत्तिविवक्षायां चोदकात्सम्भवत्प्राप्तिकस्याग्नेरप्राप्तत्वाभावाद्वैकृताग्निविध्यव्याप्तिः।

अपि च पौर्णमासीविधावप्यव्याप्तिः। पौर्णमास्यान्तरालरूपविधिद्वयाभावेऽपि उपांशुयाजस्य विहितस्य यत्र क्वचित्काले कर्तव्यतया 'य इष्ट्या'दिवाक्येन वा पौर्णमास्यामपि पक्षप्राप्तत्वात्।

न चोक्तविधिद्वयभावे उपांशुयाज एवालीकः स्यात्, विधायकाभावात्। यस्य पौर्णमासीसम्बन्ध आनीयत इति वाच्यम्। उक्तविधिद्वयाभावे "विष्णुरुपांशु यष्टव्य" इत्यादिभिरेवोपांशुयाजोत्पत्तिसम्भवात्। उक्तविधिद्वयसद्भावे हि विष्ण्वादिवाक्यानामर्थवादत्वम्।

एवमग्रताविधावप्यव्याप्तिः। प्राकृत-वैकृतविध्यभावेऽप्यैन्द्रवायवाग्रतायाः पाठप्राप्तत्वात्। पाठस्याप्यग्रतामानत्वात्। तदभावोऽपि कृत्वा चिन्तनीय इति चेदेवमपि विहितानां ग्रहणानामवश्यानुष्ठेयतया ऐन्द्रवायवाग्रत्वस्यापि कदाचित्प्राप्त्या अत्यन्ताप्राप्त्यभावात्।

अथैवं ग्रहणविधिरपि कदाचिदग्रताप्रापक एवेति तदभावेऽपि कृत्वा चिन्तनीयः, तथा चाग्रताया अत्यन्ताप्राप्तिरेवेति चेत्। हन्तैवं हन्त्यादिविधिष्वतिव्याप्तिरनिवार्या स्यात्। "व्रीहिभिर्यजेते"ति प्रकृतिद्रव्यविधेरभावे आज्यादेरिव पुरोडाशस्यापि लोकसिद्धस्यैव ग्राह्यतया प्रयोगमध्ये वैतुष्यादेरसम्पाद्यतया हन्तेरप्यत्यन्ताप्राप्तत्वात्।

यदि वहिः प्रयोगाश्रयोऽपि हन्तिरावश्यक एवेति नात्यन्ताप्राप्तिरिति मन्यसे, तर्हि आग्नेयोत्पत्तिवाक्ये हन्तिप्रापकमष्टाकपालपदमपि नास्तीति तर्कयामि। तत्पदस्याप्यभावे हि "सर्वस्मै वा एतदि"ति वाक्येन उपांशुयाज इवाज्यस्यैवाग्नेयद्रव्यत्वापत्त्या हन्तेरत्यन्ताप्राप्तिसत्वात्। तस्मात् सकलवैदिकमानाप्रवृत्ताविति वा सकलोपदेशाप्रवृत्ताविति वा विवक्षायां हन्तिविध्यतिव्याप्तिः स्यादेव।

अपि च त्रिकालाप्राप्तिरत्यन्ताप्राप्तिरिति विवक्षायां साङ्ग्रहणीविध्यव्याप्तिरेव। विध्युद्देशार्थवादोभयाभावेऽपि विश्वजिन्न्यायस्फुरणात्पूर्वं तत्पूर्वपक्षन्यायस्फुरणे सति ग्रामफलस्यापि पक्षप्राप्त्या अत्यन्ताप्राप्त्यभावात्। त्रैकालिकाप्राप्तिपदेन पक्षप्राप्तिराहित्यविवक्षायां "विहितानां ग्रहणानां" इत्याद्युक्तविधया पक्षप्राप्तविषये अग्रताविधौ पौर्णमासीविधौ चाव्याप्तिः स्यात्।

किञ्च विधेयस्योद्देश्यान्वयबोधकत्वेन सम्भावितोपदेशमात्राप्रवृत्तावत्यन्ताप्राप्तिरप्राप्तिरिति विवक्षायां पृष्ठाज्यभागविध्यतिव्याप्तिरेव नापैति। प्राकृतपृष्ठाज्यभागविध्योरपि अतिदेशार्थापनद्वारा विधेयस्य विकृत्युद्देश्यसम्बन्धबोधकत्वादुपदेशत्वाच्च। प्राकृतोपदेशस्यैवाभावे कृत्वा चिन्त्यमाने तन्मूलकातिदेशस्यासम्भवेन पृष्ठाज्यभागयोरत्यन्ताप्राप्तत्वेन तत्रातिव्याप्तिर्दुर्वारा।

अथैवमुच्यते–उद्देश्यान्वयबोधकोपदेशमात्राप्रवृत्तावत्यन्तसाक्षाद्बोधकमेव विवक्षितम्। प्राकृतपृष्ठविधिस्तु पृष्ठस्य न साक्षाद्विकृत्यन्वयबोधकः चोदकरूपद्वारापेक्षित्वात्। तथा च न पृष्ठादिविधावतिव्याप्तिरिति चेत्। तर्हि प्राकृताग्रताविध्यव्याप्तिः। प्राकृताग्रताविध्यभावेऽपि पाठत ऐन्द्रवायवाग्रत्वस्य प्राप्तत्वात्। पाठस्य श्रुतिकल्पनद्वारैवाग्रताप्रापकत्वेनोपदेशमानत्वेऽपि तदप्रवृत्तेरकृत्वा चिन्तनीयतया तद्भिन्नोपदेशस्य "यदि रथन्तरसामा सोमस्स्यैन्द्रवायवाग्रान् ग्रहान् गृह्णीयादि"त्यस्यैवाप्रवृत्तेः कृत्वा चिन्तनीयतया तदानीं पाठादग्रतायाः प्राप्तत्वादप्राप्तनैमित्तिकताप्रापकत्वेन लद्दयत्वाच्च मन्त्रलिङ्गस्य श्रुतिकल्पनद्वारा सम्बन्धबोधकमानत्वेन तद्भिन्नस्य "इमामगृभ्णन्नि"ति विधेरेवाभावे प्राप्तविषयत्वात् तद्विधावतिव्याप्तिश्च।

यद्युच्येत—उद्देश्यान्वयेत्यादिना साक्षात्परम्परया वा अतिदेशद्वारमनपेक्ष्य, विधेयस्योद्देश्यान्वयबोधकवैदिकोपदेशमात्राप्रवृत्तावव्याप्तिर्विवक्षिता अतिदेशापेक्षितत्वात् न पृष्ठादिविधावतिव्याप्तिः। साक्षात्परम्परया वेत्युक्त्या च नाग्रताविध्यव्याप्तिः। अतिदेशमनपेक्ष्य, श्रुतिकल्पनपरम्परयाग्रताबोधकोपदेशमानस्य पाठस्याप्यभावे अग्रताया अत्यन्ताप्राप्तत्वादिति, तर्हि वैकृताग्रताविध्यव्याप्तिः। तत्र तादृशसकलोपदेशाप्रवृत्तावपि अतिदेशद्वारा प्राकृताग्रताविधिनैवाग्रतायाः प्राप्तत्वात्।

अपि च प्रकृतविधेयस्येति प्रकृतत्वविवक्षणात् "व्रीहिभिर्यजेते"त्यादौ, "आज्यभागौ यजती"त्यादौ चातिव्याप्तिस्स्यात्। व्रीहीणां प्रकृतविधिविधेयानां यागस्य च सम्बन्धबोधकसकलवैदिकमानाप्रवृत्तौ यवशास्त्रेण यवानामेव प्रवृत्त्या व्रीहीणामत्यन्ताप्राप्तत्वाद्यवशास्त्रस्य प्रकृतविधिविधेयसम्बन्धविघटकस्य बाधकत्वाभावेन तदप्रवृत्तेरतर्कणीयत्वात्।

एवमाज्यभागविध्यप्रवृत्तावपि "इडामुपह्वयत" इत्यादिगृहमेधीयप्राकृतेडोपाह्वानपुनःश्रवणान्तरेण परिसंख्याविधीभूय स्वव्यतिरिक्ताङ्गानां परिसंख्याने आज्यभागयोरप्यत्यन्ताप्राप्तत्या'दिडामुपह्वयत' इत्यादेराज्यभागबोधकत्वाभावेन तदभावस्याचिन्तनीयत्वात्। इयञ्चातिव्याप्तिर्वैदिकमानपदस्य यथाश्रुतार्थकत्वे उपदेशमात्रपरत्वे च समाना।

मित्रविन्दागतसाम्प्रदश्यविध्यभावे पश्वादिगतसाम्प्रदश्यविधिना तत्रैवानारभ्याधीतसाम्प्रदश्यस्योपसंहारात् मित्रविन्दायामप्राप्त्या तत्र साम्प्रदश्यप्रापके तत्रत्यसाम्प्रदश्यपरिसंख्याविधौ, "यञ्जुह्वां गृह्णाति, प्रयाजेभ्यस्तत्, यदुपभृति प्रयाजानुयाजेभ्यस्तदि"ति नियम-विध्योश्चातिव्याप्तिः। पश्वादिगतसाम्प्रदश्यविधीनां "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमि"ति विधेश्च प्रकृतविधिविधेयोद्देश्यसम्बन्धं प्रति विघातकत्वेनाबोधकतया तदप्रवृत्तेरचिन्तनीयत्वात् प्रकृतत्वविशेषणं हित्वा वैदिकोपदेशमात्राप्रवृत्तौ विवक्षितायामतिदेशस्यापि प्रकृत्युपदेशमूलकतया मूलाभावादप्रवृत्तिरेव फलतीति न वैदिकमानमात्राप्रवृत्तिपक्षाद्विशेषः। तत्र प्राकृतहन्त्यादिविधौ वैकृतौदुम्बरादिविधौ च अतिव्याप्तिः स्थितैव।

तथा "व्रीहिभिर्यजेते"त्यत्रापि स्यादतिव्याप्तिः। सकलवैदिकमानस्य, सकलोपदेशस्य वा मध्ये दर्श-पूर्णमासप्रकरणस्यापि तत्कल्पितविधेर्वा अप्रवृत्तौ व्रीहीणां यागसाधनत्वेनाप्राप्तेर्द्रव्यान्तरस्यापि अप्राप्ततया तदवरुद्धपूरणीयांशाभावेन व्रीहिप्राप्तिफलकत्वाच्च।

यद्यप्येवं प्रकरणस्याप्यभावं कृत्वा चिन्तयित्वा व्रीहिशास्त्रप्रवृत्तावुच्यमानायामिदं व्रीहिशास्त्रं न दर्शपूर्णमासप्रविष्टयागानुवादेन व्रीहिविधायकं, किन्तु व्रीहिविशिष्टविश्वजिन्न्यायलभ्यफलकापूर्वयागविधायकमेव स्यादिति, इतरविधौ सति वस्तुतो यस्मिन्नुद्देश्ये व्रीहिनियामकं तत्रैतत्प्राप्त्यर्थं न भवति, तथापि यत्र क्वचिदुद्देश्ये व्रीहिप्रापकमेवेत्यतिव्याप्तिरुक्ता।

यदि वस्तुतो विध्यन्तरे सति यत्र यन्नियामकम्, तत्रैव तत्प्रापकस्य विधित्वमिति विवक्षितं स्यात्, तदा प्रोक्षणविधावेवव्याप्तिः, वस्तुतो नियामकस्यैवाभावात्।

यदि च वस्तुतो विध्यन्तरसत्तादशायां यत्, प्रकृतविध्युद्देश्यम्, तत्र तत्प्राप्तिफलकत्वं विवक्षितमिति नोक्तातिव्याप्तिरित्युच्यते, तदा अग्निविध्यादिषु पूर्वोक्तेषु वहुषु प्रकृतविध्युद्देश्यादन्यत्रैव गुणकामादिप्राप्तिफलकेषु स्यादव्याप्तिः। तस्मादुद्देश्ये प्रकृतत्वस्याविवक्षणीयत्वात्। विधेये प्रकृतत्वाविवक्षापक्षे व्रीहिशास्त्रेऽतिव्याप्तिः। प्रकृतत्वविवक्षायामपि यवशास्त्रसत्वादप्राप्तव्रीहिप्रापकतयाऽतिव्याप्तिर्दर्शितैवेति, अनियमेनैकानेकविध्यप्रवृत्त्यपेक्षयेति मूलोक्तरीतिं विहाय सकलवैदिकमानाप्रवृत्तौ वा, सकलोपदेशाप्रवृत्तौ वा तत्रापि विधेये, उद्देश्ये वा प्रकृतत्वेन विशेषेण, अविशेषेण वा व्रीहिशास्त्रादौ संकटमापद्यतेऽपूर्वविधिः। मूलोक्तरीत्यनुसरणे च तत्रैव दूषणानि दत्तान्येव।

यत्तु विधेयोद्देश्यसम्बन्धबोधकोपदेशत्वावच्छिन्नोपदेशाप्रवृत्तौ सत्यां यो धर्मः प्रकृतविधिविधेयो वा विध्यन्तरविधेयो वा प्रकृतोद्देश्यसम्बन्धित्वेन वा, अन्योद्देश्यसम्बन्धित्वेन वा, अप्राप्तः प्रकृतोद्देश्ये, अन्यस्मिन् वा तत्प्राप्तिफलको विधिरपूर्वविधिरिति लक्षणार्थः। तत्प्राप्तिफलकत्वविवक्षया वैकृतोदुम्बरताविधौ नातिव्याप्तिः। विध्यन्तरविधेयो वेत्युक्त्या वैकृताग्निविधावपि नाव्याप्तिः। तादृशाप्राप्तगुणकामप्राप्तिफलकत्वात्। अन्यस्मिन्वेत्युक्त्या द्वादशाहिकाग्रताविधावपि नाव्याप्तिः। गर्गत्रिरात्रादौ वामदेव्यपृष्ठतया बृहत्सामकत्वाभावेऽपि द्वितीयेऽहनि शुक्राग्रताप्रापकत्वात्। प्रकृतविधिविधेयो वा विध्यन्तरविधेयो वेत्युक्त्या च गृहमेधीयाज्यभागविधौ नातिव्याप्तिः। तत्रा प्राप्तायाः प्राप्यमाणाया अपीतराङ्गनिवृत्तेः केनापि विधिना अविधेयत्वात् प्रवर्तनाबोधकत्वे सतीत्यधिकं विशेषणं दीयते। तेन निवृत्तिविधिपरेऽपि प्राप्तपरिसंख्याविधौ नातिव्याप्तिः। 'नातिरात्रे षोडशिनम्' इत्यादेर्निवृत्तिफलकस्य परिसंख्यात्वेनालक्ष्यत्वात् न तत्राव्याप्तिरापततीति।

तद्युक्तम् । अत्यन्ताप्राप्तनियमप्रापके नियमविधिमात्रेऽतिव्याप्तेः, वैदिकनियममात्रस्यानतिक्रमणीयत्वेन स्मृति-पुराणादिषु बहुलं विधिदर्शनात्, नियमादृष्टकल्पकविधिना वा अदृष्टं प्रति नियमस्य विधेयत्वाच्च । किंच 'व्रीहिभिर्यजेते'त्यत्राग्नेयोत्पत्तिविधेरप्यप्रवृत्तौ यवशास्त्राग्नेयाद्युत्पत्तिविधिप्रवृत्तौ वा व्रीहीणामत्यन्ताप्राप्तानां प्रकृतविधिविधेयानां प्रकृतोद्देश्ययागसम्बन्धबोधकेऽतिव्याप्तेः ।

एवं "व्रीहीनवहन्ती" त्यादावप्यतिव्याप्तिः । वैकृतोदुम्बरविधावपि प्राप्तिफलके प्रागेवातिव्याप्तिर्दर्शितैव वैकृताग्निविधावप्यव्याप्तिः ।

न च वाच्यं चोदकात् सम्भवत्प्राप्तिकस्याग्नेः फलत्वात् व्यवहिताया अपि गुणकामप्राप्तेरेव फलत्वात्, नाव्याप्तिरिति । एवं हि "व्रीहिभिर्यजते" त्यत्रातिव्याप्तिः प्रकारान्तरेण स्यात् । व्रीहीणां हि यागान्वयः श्रपणविधिसहकृतनिर्वापादिविधिभिः स्यादिति मूल उपपादितम् । तथा चान्यतः सम्भवन्नियतप्राप्तिकानां व्रीहीणां फलत्वाभावात् तेषां यागाङ्गत्वप्रयुक्तमश्वशफपरिमाणस्विष्टकृदिडाप्राशित्रादिशेषकार्यापर्याप्तानां पुरोडाशजात्यभिव्यक्तिमात्रनिर्वर्तनक्षमाणां अल्पानां व्रीहीणां सत्यपि बहुनीवारे यदुपादानं तदप्राप्तं प्राप्यत इति तस्यैव फलत्वेनातिव्याप्तिसम्भवात् । द्वादशाहिकैन्द्रवायवाग्रताविधावप्यव्याप्तिरेव । प्राकृत-वैकृतोपदेशाभावेऽपि यागादेवैन्द्रवायवाग्रतायाः प्राप्ततयाऽप्राप्तप्रापकत्वाभावात् ।

यद्युच्येत ग्रहणविधीनां तत्पाठस्याभावेऽपि चिन्त्यमाने स्यादप्राप्तार्थकत्वमिति । तदयुक्तम् । हन्त्यादिविधावुक्तातिव्याप्तिभिया तथा कृत्वा चिन्ताया अयुक्तत्वात्, गृहमेधीयाज्यभागविधौ चातिव्याप्तिः । न चेतरांगविधेयत्वान्नातिव्याप्तिरिति वाच्यम् । तद्विधेयत्वस्य त्रैदोष्यव्यवस्थाभङ्गावसरे दर्शितत्वात् ।

किञ्च इह प्राप्तपरिसंख्यायामितरनिवृत्तेरविधेयत्वेऽपि विध्यन्तरविधेयत्वसंभवात् "नाशुचिः कर्म कुर्वीत, सर्वकर्माणि संन्यस्य, शान्तो उपरतः, इत्यादिविधिषु कर्ममात्रनिवृत्तौ विधीयमानाया इतराङ्गरूपप्रयाजादिनिवृत्तेरपि विधेयत्वसम्भवात् ।

किञ्चात्र किं नाम विधेयत्वम् ? न तावन्नियम्यत्वं वा प्रोक्षणादावेवासम्भवात् । नाप्यपूर्वविधिविधेयत्वम् । "विधिरत्यन्तमप्राप्त" इत्यादि व्यवहारानुसारेण केवलविधिपदस्यापूर्वविधिपरत्वदर्शनादिति वाच्यम्, इदानीमेव तस्य विचार्यत्वेनात्माश्रयात् ।

न च त्रितयसाधारणं विधिफलत्वम्, इतरनिवृत्तेरपि फलत्वानपायेनाऽऽज्यभागविधावेवातिव्याप्त्यवारणात्। नापि विधिप्रत्ययार्थे कर्मत्वं "प्रोक्षणेन व्रीहीन् संस्कुर्यादि"त्यर्थके "व्रीहीन् प्रोक्षती"त्यादावेवाव्यापनात्। विध्यनुष्ठाप्यत्वं त्वितराङ्गनिवृत्तिसाधारणमेवेत्यतिव्याप्तितादवस्थ्यमाज्यभागविधौ। अत एव न विधितात्पर्यविषयत्वादिकमपि, न तु निवृत्तेर्नानुष्ठाप्यत्वम्, तस्य भावधर्मत्वादिति चेत्। न। "एतां रात्रिं जागर्ती"त्यादौ निद्राक्षयस्यानुष्ठाप्यत्वदर्शनात्। एवं "तिष्ठेद्दहनी"त्यादौ गतिनिवृत्तिरनुष्ठाप्या।

स्यादेतत् विधेयत्वं विधिप्रत्ययजन्यसंसर्गबोधे विध्यर्थेन प्रकारीभूयान्वितत्वम्। इतराङ्गनिवृत्तिः पार्ष्ठिकमानसबोधविषयोऽपि न प्रत्ययजन्यबोधविषयः, आज्यभागयोरेव तथात्वात्। तथा च नाज्यभागविध्यतिव्याप्तिरिति चेत्। मैवम्। "यदाग्नेयोऽष्टाकपालः, सौर्यं चरुं निर्वपेत्, अग्नीषोमीयं पशुमालभेत, इत्याद्यव्याप्तेः। तत्र विधेयत्वाभिमतस्य यागस्य द्रव्यदेवतासम्बन्धानुमेयत्वेन प्रत्ययजन्यबोधे प्रकारत्वाभावात्।

एतेन-प्रवर्तनाबोधकत्वे सतीत्यधिकविशेषणेन निवृत्तिवाचिन्यां प्राप्तसंख्यायामपि नातिव्याप्तिरित्यपास्तम्। एवमप्यप्राप्तपरिसंख्यायां दोषतादवस्थ्यात्।

किञ्च कुण्डपायिनामयने "उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहुति, मासं दर्शपूर्णमासाभ्यां यजन्ते"ति श्रूयते। तत्र प्रकरणान्तरे प्रयोजनान्यत्वमितिन्यायेनाग्निहोत्रवद्दर्शपूर्णमासावपि कर्मान्तरे एव। दर्शपूर्णमासनाम्ना दर्शपूर्णमासधर्मातिदेशः क्रियते 'दर्शपूर्णमासवत्कुर्यादि'ति। दर्शपूर्णमासयोश्च "नानृतं वदेदि" त्यादि निषेधगम्या निवृत्तयोऽप्यङ्गम्। ताश्च प्रयाजादिवदेकप्रसरेणैव दर्शपूर्णमासपदेन कर्तव्यतया बोध्यन्ते। तत्र निवृत्तिबोधकतया "न ददाति, न जुहोति, नातिरात्रे षोडशिनमि"त्यादिवत् परिसंख्यात्वेन युष्मदभ्युपेये नाम्ना धर्मविधावतिव्याप्तिः।

न चेष्टापत्तिः—प्रयाजाद्यङ्गबोधकतयापूर्वविधित्वादिति वाच्यम्। निवृत्तिबोधकत्वांश एवातिव्याप्त्यापादनात्। प्रवर्तनापरत्वस्य सर्वांशेऽप्यनपायात्। अन्यथाविरम्यव्यापारेण वाक्यभेदापत्तेः। तत्रापीष्टापत्तौ तस्य कर्मान्तरत्वमेवोच्छिद्येत। अनूद्य, उपसदानन्तर्य-मासरूपानेकगुणविधाने वाक्यभेदः स्यादिति भीत्यैव किल तत्राधिकरणे कर्मान्तरत्वमङ्गीकृतम्।

यत्तु लक्षणीयविधेयोद्देश्यसम्बन्धबोधकोपदेशत्वावच्छिन्नोपदेशाप्रवृत्तिप्रयोज्याप्राप्तिरत्यन्ताप्राप्तिपदेन विवक्षिता। तथा तादृशाप्राप्तिर्यस्य प्रकृतोद्देश्येऽन्य-

स्मिन् वा प्राप्तिफलकविधित्वमपूर्वविधित्वमिति पर्यवस्यति। तथा च प्रयोज्यत्वविवक्षया न प्राप्तपरिसंख्यायामतिव्याप्तिः। तथा हि 'न नीलवसनं धार्यं न भूपालैरनुत्सव" इति प्राप्तपरिसंख्या "न नीलवसनं धार्यमि"ति समान्यशास्त्रेणोत्सवेऽनुत्सवे च नीलवस्त्रधारणनिषेधे प्राप्ते उत्सवे धारणनिषेधस्य परिसंख्यानात्। अत्र च "न भूपालैरनुत्सव" इत्यंशेऽतिव्याप्तिरापाद्या, सा च न सम्भवति, इह हि उत्सवे उद्देश्ये प्रकृतविधिविधेयस्य नीलवस्त्रधारणाभावपरिसंख्यानस्याप्राप्तिरुत्सवे नीलवस्त्रधारणभाव एव। स तु न प्रकृतविध्यभावप्रयुक्तः, किन्तु "न नीलीवसनं धार्यमि"ति सामान्यनिषेधप्रयुक्तः इति विवक्षिताप्राप्त्यभावान्न व्याप्तिरिति।

तदसारम्। 'समाननितरच्छेनेन, एतद्ब्राह्मणान्येव पंच हवींषि, मासमग्निहोत्रं जुहुती'त्यादौ अव्याप्तेः, तत्र प्रकृतविधिविधेयानामतिदेश्यधर्माणामप्राप्तिरपि हि नैतद्विध्यभावप्रयुक्ता। एतद्विध्यभावेऽपि इष्वादिकर्मणां श्येनादितादात्म्ये तावद्धर्मलाभसम्भवात्। यस्माद्विकृतीनां धर्माभावस्य प्रकृतितादात्म्यभावप्रयुक्ततया विवक्षिताप्राप्त्यभावादव्याप्तिः।

एवं वैकृताग्निविध्यादिषु सर्वेष्वपि पूर्वोक्तेष्वव्याप्तिः। तेष्वपि प्रापणीयगुणकामाद्यप्राप्तेः, प्राकृताग्न्याश्रयत्वाभावप्रयुक्तत्वेन प्रकृतविध्यभावप्रयुक्तत्वाभावात्।

अपि च सत्यपि विधौ नास्तिक्यादिना कर्माननुष्ठानाच्छक्त्यग्रहादिना कर्माज्ञानाच्च कथं कर्मणामप्राप्तिर्विध्यभावप्रयुक्ता। किं बहुना। "समिधो यजति व्रीहिन् प्रोक्षती"त्यादावपि समित्प्रोक्षणाद्यप्राप्तेस्तद्गतधर्मसाधनत्वांशसाक्षात्काराभावप्रयुक्ततया प्रकृतविध्यभावप्रयुक्तत्वाभावेन लक्षणासम्भव एव वक्तुं शक्यते।

किञ्चात्र किं नाम प्रयुक्तत्वम्? जन्यत्वम्, व्यापकत्वम्, अन्यद्वा। नाद्यः प्रोक्षणाप्राप्तेः, प्रोक्षणाद्यनुष्ठानप्रागभावरूपायाः प्रकृतिविध्यप्रवृत्तिजन्यत्वायोगेनासम्भवापत्तेः।

न द्वितीयः—तदपि देशतः, कालतो वा। न देशतः। विधेरप्रवृत्तिर्हि वाक्याभावो वा स्यात्, तदुभयमपि गगने, शब्दे वा विद्यते। प्रोक्षणाद्यप्राप्तिस्तु तदनुकूलकृत्यभावश्चेदात्मनि, तदनुकूलचेष्टाद्यभावश्चेत्प्रयोक्तृशरीरादौ विद्यत इति व्यधिकरणत्वान्न देशतो व्याप्तिसम्भवः। नापि कालतः—एतद्विध्याप्रवृत्तावपि स्मृत्युपदिष्टवचनादिभिः प्राप्तिसम्भवात्। ननु स्मृत्यादिकमपि एतद्विधिमूलकमेवेति चेत्। अस्तु एतावता क्वचित्पूर्वकाले तद्विधिप्रवृत्तिमात्रेण स्मृत्यादेरात्म-

लाभे उच्छिन्नशाखावादे इदानीं तदप्रवृत्तावपि स्मृत्यादिना प्रोक्षणादिप्राप्ति-सम्भवे कालिकव्याप्तिव्यभिचारस्य निष्प्रत्यूहत्वात्। अन्यादृशस्य निर्वक्तु-मशक्यत्वादिति दिक्। अपि चैवमपि व्रीहिशास्त्रादुद्भावितातिव्याप्तिः स्थितैव।

यत्तु लक्षणीयविध्यप्रवृत्तिप्रयोज्यत्वपदेन तर्कितलक्षणीयविध्यप्रवृत्ति-दशायां लक्षणीयविधिविधेयानुष्ठानप्रतिबन्धकत्वेन सम्भावितविध्यन्तराप्रयो-ज्यत्वं विवक्षितम्। एवं च यस्य धर्मस्य, प्रकृतविधिविधेयस्य वा, विध्यन्तरविधे-यस्य वा, प्रकृतोद्देश्ये वा, अन्यस्मिन् वा अप्राप्तिः लक्षणीयविधिप्रवृत्त्यभाव-तर्कणदशायां लक्षणीयविधिविधेयानुष्ठानप्रतिबन्धकत्वे वा सम्भावितविध्यन्तरा-प्रयोज्या, तादृशस्य धर्मस्य प्रकृतोद्देश्ये अन्यस्मिन् वा प्राप्तिफलको विधिरपूर्व-विधिरिति पर्यवस्यति।

अत्र च प्रतिबन्धकत्वेनासम्भावितेति विध्यन्तरविशेषणाद् गृहमेधीये 'अपबर्हिषः प्रयाजान् यजती' ति विधौ नाव्याप्तिः। पूर्वविवक्षायां हि तत्राव्याप्तिः प्राप्ता। तद्विधेः पूर्वं विधेयप्रयाजाप्राप्तेः। इतराङ्गप्रसङ्ख्यार्थाज्यभागविधि-प्रयुक्तत्वेन प्रकृतविध्यप्रवृत्तिप्रयोज्यत्वाभावात्। तद्विवक्षायां तु प्रयाजाप्राप्ते-र्विध्यन्तरप्रयोज्यत्वेऽपि प्रकृतविधिविधेयप्रयाजानुष्ठानप्रतिबन्धकत्वेन सम्भा-विताज्यभागविधिरूपविध्यन्तरप्रयोज्यतया तथा असम्भावितत्वरूपविशेषणा-भावेन विशिष्टविध्यन्तराप्रयोज्यत्वरूपविशिष्टाभावसत्वान्नाव्याप्तिः।

एवं "घृते श्रपयती" ति कृष्णलचरुश्रपणविधौ विक्लृत्तिरूपफलाभाव-प्रयुक्ताप्राप्तिमदर्थकेऽपि पूर्वविवक्षाप्राप्ताव्याप्तिरपि विध्यन्तरपदान्निरस्यते। श्रवणाप्राप्तेः फलाभावप्रयुक्तत्वेन विध्यन्तराप्रयुक्ततया विध्यन्तरप्रयोज्यत्वरूपवि-शेष्याभावादेव विशिष्टाभावसत्त्वात्। विशेषणान्तरकृत्यं च प्रागेव दर्शितमिति। तदप्ययुक्तम्। यतः विशेषणान्तरप्रयुक्तदोषा अपि प्रागेव दर्शिताः। इदानीन्तन-विवक्षाप्ययुक्तैव। "न नीलीवसनं धार्यम्, न भूपालैरनृत्सव" इत्यत्रातिव्याप्तेः। धारणाप्राप्तेः धारणप्रतिबन्धकसामान्यविधिप्रयोज्यत्वेन तत्र विशेषणाभाव-सत्त्वात्!

न च लक्षणीयविध्युद्देश्यमात्रे विधेयानुष्ठानप्रतिबन्धक एव प्रतिब-न्धकपदेन विवक्षितः। तथा च नोत्सवधारणविधावतिव्याप्तिः। उत्सवानुत्सव-साधारणेन नीलवस्त्रधारणनिषेधपरसामान्यविधेः प्रकृतोद्देश्ये उत्सवमात्रे प्रकृतविधिविधेयानुष्ठानप्रतिबन्धकत्वाभावेनाप्राप्तौ विशिष्टाभावस्याभावान्नाति-व्याप्तिरिति वाच्यम्। एवमपि भवदभिमतपरिसंख्याविधौ "नातिरात्रे षोडशि-

नमि" इत्यत्रातिव्याप्तेः। लक्षणीयविध्युद्देश्य एवातिरात्रे ऽग्रहणप्रतिबन्धकस्य "अतिरात्रे षोडशिनं गृह्णाती" ति विधेः सत्त्वेन विवक्षितविशिष्टाभावसत्त्वात्। यद्यपि 'अपबर्हिषः प्रयाजान् यजजी' ति विधिरवभृथे श्रूयते, न तु गृहमेधीये। तथा च तत्र नाव्याप्तिस्तथापि नोदाहरणमादरणीयम्, किन्तु न्यायसाम्यात्तत्रत्यम् "इडामुपह्वयत" इत्युदाहार्यम्, गृहमेधीयपदं वा अवभृथपरं ग्राह्यम्।

अपि च 'व्रीहिभिर्यजेत, यवैर्वायजेत' इत्यत्र नियमविधावव्याप्तिः स्यात्। लक्षणीयविध्युद्देश्य एव दर्शपूर्णमासयागे विधेयव्रीहियवानुष्ठानप्रतिबन्धकौ व्रीहियवविधी। उभयाभावे हि प्रधानविधिवलादनियतद्रव्याक्षेपे व्रीहियवयोः पाक्षिक्यप्राप्तिः स्यात्। अन्यतरसत्त्वे तु विद्यमानेनाविद्यमानविधिविधेयस्य व्रीहेर्यवस्य वानुष्ठानप्रतिबन्धात्। एवं प्रकृतोद्देश्य एव विधेयानुष्ठानप्रतिबन्धकत्वेन सम्भावितविध्यन्तरप्रयोज्यायाः अप्रदाने सम्भावितत्वरूपविशेषणाभावप्रयुक्तविशिष्टाभावसत्त्वात्।

एवमेकत्रैव श्रपणे गार्हपत्याववनीयरूपाधिकरणविकल्पपरे "आहवनीये, गार्हपत्ये वा हवींषि श्रपयति" इत्यत्र, एकत्रैव पिण्डे विकल्पपरे पिण्डानभ्यवहरेत्, ब्राह्मणं वा प्राशये" दित्यत्र, अन्यत्राप्येवजातीयके दृष्टार्थविकल्पपरे समानोद्देश्यकनियमविधावतिव्याप्तिः दर्शयितव्या।

सर्वत्र विकल्प-विधिभ्यां तत्रैवोद्देश्ये परस्परविधेयानुष्ठानप्रतिबन्धकत्वेन सम्भाविताभ्यां प्रयुज्यमानायामप्राप्तौ, तथा सम्भावितत्वरूपविशेषणाभावप्रयुक्तविशिष्टाभावस्यानपायात्।

किंचात्रानुष्ठानप्रतिबन्धकत्वं विवक्षितं यद्यनुष्ठानरूपकार्यानुत्पादव्याप्यत्वम्, तदा "अपबर्हिष" इति प्रतिप्रसवविधावव्याप्तिः। प्रयाजानुष्ठानाभावस्य शरीरे, आत्मनि वा भावेन तत्रत्याज्यभागविधेः तव्द्यधिकरणस्याप्रतिबन्धकतया विवक्षितप्रतिबन्धकत्वेनासम्भावितविध्यन्तरप्रयोज्यायामाप्राप्तौ विवक्षितविशेषणाभावात्। यद्यनुष्ठानकारणीभूताभावप्रतियोगित्वम्, तदापि तत्रैवाव्याप्तिः। "अपबर्हिष" इति विध्यनुष्ठाप्ये प्रयाजे वस्तुगत्या असतस्तर्कमात्रकल्पितस्वभावस्याज्यभागविध्यभावस्याहेतुत्वेनाज्यभागविधेः कारणीभूताभावप्रतियोगितया विवक्षितविशेषणाभावात्। यदि च करणविघटकत्वम्, तदापि तत्रैवाव्याप्तिः। प्रयाजानुष्ठानकारण "मपबर्हिष" इत्यादिविधिं प्रति स्वयमेव तेन फलतो विघट्यमानस्याविघटकतया आज्यभागविधेरप्रतिबन्धकत्वात्।

यदि त्वनुष्ठानानुत्पादकत्वम्, तदा "न भूपालैरि"ति परिसंख्यायाम-तिव्याप्तिः। तथाहि—"न नीलीवसनं धार्यमि"ति सामान्यपरिसंख्या, तदुपमर्देनाऽनुत्सवे त्वधारणं न कार्यमिति द्वितीयपरिसंख्या। तथाच भूपालाभूपाल-साधारण्येन समुच्चित्य उत्सवे नीलवस्त्रधारणप्राप्तौ भूपालैरेव उत्सवे नीलवस्त्र-धारणं कार्यम्, न ब्राह्मणादिभिरिति" भूपालैरित्यनेन तृतीयपरिसंख्या क्रियते। तत्र तृतीयपरिसंख्याविधिविधेयस्य ब्राह्मणादिकर्तृकोत्सवकालीननीलवस्त्रधारणा-भावाभावाभावस्य प्रतिबन्धकं वस्त्रधारणसम्पादकं वाच्यम्। तादृशत्वं च रागस्यैव। न तु मध्यमपरिसंख्यायाः। तस्यां सत्यामपि रागाभावे अधारण-स्यैव सत्त्वात्! तथा च मध्यमपरिसंख्याविधौ विवक्षितप्रतिबन्धकत्वाभावेन विवक्षितप्रतिबन्धकविध्यन्तरप्रयोज्या धारणस्याप्राप्तिरस्तीति तत्रत्यपरिसंख्या-यामतिव्याप्तिः।

किं च रागप्राप्तविषयकप्राप्तपरिसंख्यासु "नानृतं वदेत्, नागम्यां गच्छेत्, नेक्षेतोद्यन्तमादित्यमि" त्यादिषु चातिव्याप्तिः। एतेषां विधीनामभावे एतद्विधिविधेयरागप्राप्तविषयकारितस्य केनापि विधिना प्रयुज्यमानत्वाभावेन एतद्विधेयाप्राप्तौ कृष्णलचरुश्रपणवद्विशेष्याभावादेव विशिष्टाभावसत्वात्।

नचैते मा भूवन् परिसंख्याविधय इति वाच्यम्। "न ददाती" त्यादौ तथात्वमंगीकुर्वता विशेषाभावेनेहापि परिसंख्यात्वस्याङ्गीकार्यत्वात्। एषां नियमविधित्वेऽपि अतिव्याप्तिरेव, नियमविधित्वं तु पुमिच्छाया अनियततया अनृतवदनादेरपि पक्षप्राप्तेरिति द्रष्टव्यम्।

एतेन यद्वा लक्षणीयविध्यप्रयोज्यत्वपदेन लक्षणीयविध्यप्रामाण्यप्रयो-जकविध्यन्तराप्रयोज्यत्वं विवक्षितम्। तथा च प्रापकपरिसंख्याशास्त्रयो-र्विकल्पावश्यम्भावेन प्रापकशास्त्रस्य परिसंख्याशास्त्रपाक्षिकाप्रामाण्यप्रयोज-कत्वात्, तादृश विध्यप्रयोज्यत्वाभावादप्राप्तेर्न प्राप्तपरिसंख्यायामतिव्याप्तिः। "नातिरात्रे षोडशिनमि" त्याद्यलक्ष्यमेवेत्युक्तम्। अनूचानकर्तृकप्रथमप्रयोगे प्रवर्ग्याप्राप्तेः "न प्रथमयज्ञे प्रवृञ्ज्यादि" ति निषेधविधिकृतत्वेऽपि तस्या-ननूचानप्रथमप्रयोगविषयत्वात्, लक्षणीयविध्यप्रामाण्यप्रयोजकत्वभावेनाप्राप्तौ विशिष्टाभावसत्वात्। "कामन्तु योऽनूचानः स्यात्, तस्य प्रवृञ्ज्यादि"ति प्रतिप्रसवविधावपि नाव्याप्तिरित्यपास्तम्।

एवं विवक्षायामपि रागप्राप्तार्थविषयपरिसंख्यासु "नानृतं वदेदि" त्यादिषु विधिमात्राप्रयोज्यायामप्राप्तौ विशेष्याभावादेव विशिष्टाभावसत्वेना-तिव्याप्तितादवस्थ्यात्। एवं कृष्णलचरुश्रपणविधावप्यतिव्याप्तिरूह्या।

किं च विधेर्विध्यन्तराप्रामाण्यप्रयोजकत्वांगीकारेऽसम्भव एव। प्रमाण-लक्षण एव कृत्स्नो वेदः प्रमाणमिति स्थितत्वात्।

अथ प्रतिपक्षशास्त्रमनालोचयतः प्रथमोत्पन्नायामापातशास्त्रार्थबुद्धावत्र-प्रामाण्यशङ्काधायकत्वमेव तथा विवक्षितमिति चेत्। तर्हि "कामन्तु योऽनूचानः स्यात्, तस्य प्रवृञ्ज्यादि" त्यत्राव्याप्तिः। तत्रापि "न प्रथमयज्ञे प्रवृञ्ज्यादिति" निषेधबोधेन "कामन्तु य" इत्यादिविधावप्रामाण्यशङ्कोत्पादनात्।

ननु नात्र लक्षणीयविधावप्रामाण्यशंका विधीयते "न प्रथययज्ञ" इति विधिना। प्रस्तुतेनैव तस्य संकोचनात्। तथा च लक्षणीयविध्यप्रामाण्यप्रयो-जकविध्यन्तराप्रयोज्यत्वात् लक्षणीयविधिविधेयाप्राप्तेः नाव्याप्तिरिति चेत्। तर्हि "न भूपालैरनुत्सव" इति प्राप्तपरिसंख्यायामतिव्याप्तिः। "न नीलीवस-नमि"ति निषेधस्याप्युत्सवानुत्सवसाधारण्येन प्रवृत्तस्य प्रकृतविधिना संकोच्यमानत्वेन स्वयंप्रामाण्यमनुभवतः प्रकृतिविध्यप्रामाण्याप्रयोजकतया उत्सवसाधारणाप्राप्तावपि विशिष्टाभावसत्वात्। एवं च प्रापक-परिसंख्याशास्त्र-योः सामान्यविशेषविषयत्वे विकल्पावश्यंभावोक्तिः कथमुपपद्यताम्। अथापि वा परिसंख्याशास्त्रे विशेषविषयेऽप्रामाण्यं स्वयं सामान्यविषयेण प्रापकशास्त्रेण प्रयुज्यत इति कथन्तमामुपपद्यताम्। अथाप्रामाण्यप्रयोजकत्वमनुष्ठानप्रतिबन्ध-काज्यभागविधिप्रयोज्यत्वात् प्रयाजाप्राप्तेः।

यद्यपि "बृहत्पृष्ठं भवती" त्यादावप्रामाण्यापादकविकल्पवचनाप्रोज्या पृष्ठाप्राप्तिर्भवति। उपदेशान्तर्गतविकल्पवाक्यस्याप्यभावे बोधकाभावकृतत्वा-दिति तत्र लक्षणसमन्वयमात्रमस्ति, तथापि तन्निवृत्त्यर्थं तत्र तदप्रामाण्यप्रयोज-केति विशेषणं न देयम्। विशेष्याभावादेव विशिष्टाभावसत्वात्। तस्मादयुक्त-मेतत् "न तौ पशौ करोती" त्यत्राव्याप्तिश्च। अत्यन्ताप्राप्तस्यैव तद्विधेयस्याज्य-भागनिषेधस्याप्राप्तेः, एतद्विधिविधेयपाक्षिकत्वापादकतया प्रामाण्यप्रयोजकेन चोदकात्मकविध्यन्तरेण कृतत्वात्, यदि तत्र लक्ष्यं परिसंख्यात्वादिति, तर्हि तत्रापि विध्यन्तराप्रयोज्यत्वमात्रेणातिव्याप्तिनिराससंभवे विशेषणवै-यर्थ्यमेव।

एतेनाप्रमाण्याप्रयोजकेति नञ्प्रश्लिष्टः पाठः "हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयती" त्यादिनियमविध्यतिव्याप्तिपरिहारग्रन्थेऽप्रामाण्याप्रयो-जकेति पाठदर्शनादित्यपास्तम्, फलाभावात्। "न तौ पशौ करोती"ति प्रसङ्गाच्च। तत्राज्यभागप्राप्तिरूपप्रकृतविधिविधेयाभावस्य विध्यन्तरप्रयोज्यत्वेऽपि तदप्रामाण्याप्रयोजकविध्यन्तराप्रयोज्यत्वात्, अग्रे नञ्घटितपाठस्तु लेखक-दोषमूल इत्येव कल्पनीयम्।

आक्षेपाक्षेपग्रन्थे "तासु स्यात्साप्तदश्यं प्रकरणरहितमि"ति ३९श्लोकेना-नारभ्याधीतं "सप्तदश सामिधेनीरनुब्रूयादि"ति विहितं साप्तदश्यं यासु सौर्या-दिविकृतिषु साप्तदश्यं न श्रूयते, तासु चोदकप्राप्तेन पांचदश्येन, विकल्पमनु-भवतु। मित्रविन्दादिप्रकरणाधीतम् साप्तदश्यं तु सौर्यादिवद्विकल्पे प्राप्ते तदप-वादरूपतया नियमार्थमस्तु।

एवं हि ह्यनारभ्याधीतसाप्तदश्यस्य मित्रविन्दादिमात्रशरणतया तत्तत्प्रकरणाधीतसाप्तदश्यवाक्यतः प्रवृत्तिविशेषकरत्वाभावः। तत्प्रयुक्तं वैयर्थ्यम्। तत्परिहारायाभ्युदयार्थत्वकल्पनं वा व्युदस्यते। तथा च सार्वकाम्यवाक्या-व्याप्त्युद्धारदशायां केवलादृष्टार्थत्वदृष्टान्तीकरणमयुक्तमिति प्रतिपादितम्।

अत्र नव्यगुरुणोक्तम्-अनारभ्याधीतं साप्तदश्यं हि सामिधेनीमुखेनैव प्राप्नोति। सामिधेन्यश्च विकृतौ चोदकलभ्याः। ताश्च चोदकेन पांचदश्य-परिच्छिन्ना एव प्राप्यन्त इति पांचदश्यावरोधाविशेषात् न सर्वविकृतीर्गच्छति। किन्तु यत्र प्राकरणिकवचनविरोधात्पांचदश्यस्य न प्राप्तिः, तामेव मित्रविन्दा-दिकां विकृतिं गच्छति, तत्र पांचदश्यावरोधदोषाभावात्। अतः सौर्यादिषु साप्तदश्यप्रसक्तेरेवाभावात्कथं विकल्पः। उक्तं च तृतीये आचार्यैः—

नानारभ्यविधिप्राप्त्या सर्वास्वेव भविष्यति
पश्वादिव्यतिरिक्तासु पांचदश्येन बाधनात्।
स्वाङ्गेन पांचदश्येन व्याप्तास्ता ह्यतिदेशतः। इति।

तस्मादुक्तरीत्याऽर्थत्त्वासम्भवादेकविषयत्वेऽप्यभ्युदयदृष्टकारित्वेनैव सार्थ-कत्वमङ्गीकर्तव्यमिति सिद्धान्तस्थितिरभग्नेति।

तदसारम्। अनारभ्याधीतं साप्तदश्यं मित्रविन्दादि गत्वा व्यर्थं मा भूत् प्रवृत्तिविशेषकरं यथा स्यादित्येवं स्वाकांक्षौत्कट्येन पांचदश्यसम्बन्धात् संख्यान्तरनिराकाङ्क्षमपि सौर्यादि सामिधेनीं प्राप्य विकल्पमनुभवतीति वदतोऽस्मान्प्रति पाञ्चदश्यावरोधस्यादोषत्वात्।

किञ्च यदि साप्तदश्यं विकल्पेनान्वयार्हमपि पांचदश्यावरोधात् संख्यान्तर-निराकाङ्क्षा सौर्यादिसामिधेनीतिं न तत्रान्वेति, तदा केवलपौनरुक्त्यग्रस्ततया विकल्पेनाप्यन्वेतुमनर्हमिदं मित्रविन्दादिसामिधेन्या कथमन्वेतु? तस्याः प्राकरणिकसाप्तदश्यान्वितायामेव मित्रविन्दादिसामिधेन्यामस्यान्वयस्त्वयापि वाच्यः। ततः प्राक् चोदकानीतायाः सामिधेन्याः सौर्यादाविव मित्रविन्दादावपि चोदकानीतपाञ्चदश्यावरोधसाम्येन साप्तदश्यान्वयानर्हत्वात्।

वस्तुतस्तु प्रकृतिक्लृप्तोपकारं पांचदश्यमेव प्रथमं सामिधेन्यान्वेति। तत्र पांचदश्यावरोधाद्यद्यनारभ्याधीतं नान्वेति, तदा प्राकरणिकं कथमन्वेति, यदि च प्राकरणिकं स्वकांक्षौत्कट्यात् संख्यान्तराकांक्षामुख्याप्यन्वेति, तदा किमनारभ्याधीतवाक्येनेत्यास्तां तावत्।

नन्वेवमाचार्योक्तिविरोध इति चेत्। न विस्तरणीयम्, यद्वयं पूर्णपक्षिणः सिद्धान्तं व्याकुलीकुर्मः, न तु समर्थयाम इति।

नव्यास्तु मम तु प्रतिभाति—उपदेशरूपप्रबल—दुर्बलप्रमाणप्राप्तयोः साप्तदश्य-पांचदश्ययोः सौर्यादिषु विकल्पांगीकारोऽनुपपन्नः।

न चैवं सति "न तौ पशौ करोती"ति पशावाज्यभागप्रतिषेधस्यातिदिष्टाज्यभागाभ्यां सह विकल्पो न स्यादिति वाच्यम्। तत्राप्रसक्तप्रतिषेधायोगेन प्रसक्त्यर्थमतिदेशापेक्षायामुपजीव्यशास्त्रप्रापितयोरत्यन्तबाधायोगेन विकल्पांगीकारेऽपि प्रकृते तादृशविकल्पप्रमाणाभावाद्विकल्पाश्रयणमनुपपन्नम्।

न च प्रकृतेऽपि मित्रविन्दादिषु पुनः साप्तदश्यश्रवणमेव सौर्यादिषु अतिदिष्टपांचदश्यबाधेन साप्तदश्यप्रापकमस्तु। मित्रविन्दादिप्रकरणगतं तु मित्रविन्दादिष्वनारभ्याधीतवाक्यप्राप्तं साप्तदश्यं प्रापयतु। तावतापि विध्योः प्रवृत्तिविशेषकरत्वेन तदर्थं विषमशिष्टविकल्पांगीकारायोगात्। न चास्मिन् पक्षे अनारभ्याधीतवाक्यस्य संकोचापत्तिर्विकल्पवादिमतेऽपि संकोचस्यावश्यकत्वात्। अन्यथा मित्रविन्दादिषु पुनः श्रवणं व्यर्थं स्यात्।

न च विकल्पापवादरूपनियमार्थं सार्थकमिति वाच्यम्। अनारभ्याधीतवाक्येन विकल्पेन साप्तदश्यस्य प्राप्तिः, प्राकरणिकवाक्येन नित्यतया प्राप्तिरिति पाक्षिक-नित्यप्राप्त्योः शास्त्रकृतत्वेन विकल्पस्यावश्यकतया तस्यानारभ्याधीतवाक्येनैव सिध्या पुनः श्रवणवैयर्थ्यं परिहार्यमेव। अतस्तत्सार्थक्यमुपपादयताऽनारभ्याधीतवाक्यस्य सकलविषयत्वमवर्जनीयमिति तेनैव मित्रविन्दादिष्वपि साप्तदश्यप्राप्तिसम्भवान्मित्रविन्दादिषु पुनःश्रवणं व्यर्थमित्याशंकाया अभ्युदयविशेषार्थत्वेनैव सार्थक्यमापादनीयमिति विकल्पं दूषयित्वा, अभ्युदयार्थत्वसिद्धान्तं समर्थयन्ते।

तदप्ययुक्तम्। यद्यपि पक्षद्वयेऽप्यनारभ्याधीतवाक्यसंकोचोऽस्ति, वाक्यद्वयस्यापि प्रवृत्तिकरत्वमात्रमप्यस्ति, तथापि पांचदश्यबाधनेन साप्तदश्यविधिपक्षे प्राकरणिकवाक्यवैयर्थ्यं स्यात्। प्रवृत्तिविशेषकरत्वं च न स्यात्। पांचदश्यार्थबाधनेन साप्तदश्यविकल्पाश्रयणे तु प्रवृत्तिविशेषकरत्वमस्ति।

तत एव वाक्ययोः साफल्यं चास्तीति स्पष्टमेव। तथा च प्रवृत्तिविशेषकरत्वाभावप्रयुक्तवैयर्थ्यपरिहाराय विकल्पमाश्रयतां मते कस्यापि दूषणस्यानुपदर्शनात्।

एतेन नापि सामिधेनीरूपद्वाररूपसम्बन्धबोधके "सप्तदश सामिधेनीरनुब्रूयादि"त्यनारभ्याधीतविधावव्याप्तिः। एतद्विध्यप्रवृत्तिदशायामपि साप्तदश्यस्य क्रतुसम्बन्धबोधकमित्रविन्दादिप्रकरणाम्नातविधिनैव साप्तदश्यस्य प्राप्तिसंभवेनानारभ्याधीतविध्यप्रवृत्तौ अप्राप्त्यभावात्।

न चानारभ्याधीतमनुवादकमेवास्त्विति वाच्यम्। यद्यपि प्राकरणिकवाक्येनैव क्रतुसम्बन्धवत् सामिधेनीसम्बन्धोऽपि सिध्यति। तथापि वाक्यद्वयाम्नानात् प्राकरणिकवाक्येन क्रतुसम्बन्धज्ञानम्, अनारभ्याधीतवाक्येन द्वारसम्बन्धज्ञानं चानुष्ठानद्वाराऽभ्युदयकारीति 'सार्थवादके विधावार्थवादिकप्राशस्त्यज्ञानवदि"ति तन्त्ररत्नोक्तरीत्या विधित्वावश्यंभावात्।

न च तथासत्यव्याप्त्यनवकाशः। अनारभ्याधीतविध्यभावेऽभ्युदयशिरस्कत्वेन प्राप्त्यभावादिति वाच्यम्। तथा सति नियम-परिसंख्याविध्योरत्यन्ताप्राप्तिविशेषणाभ्यां व्यावृत्तिर्न स्यात्। तत्रापि स्वाध्यायविधिबलादेवाक्षेप-मन्त्रलिंगाभ्यामवघातादिप्राप्तेरभ्युदयकारित्वाभावस्य वक्तुं शक्यत्वात्। तस्मादप्राप्तिमात्रस्य लक्षणशरीरप्रविष्टत्वमंगीकृत्यातिव्याप्तिनिरासः कर्तव्यः। तथा सत्यनारभ्याधीतसाप्तदश्यविधावव्याप्तिरेवेति चेत्। मैवम्। सामिधेनीसाप्तदश्यसम्बन्धबोधकोपदेशत्वेन सम्भावितानां प्राकरणिकवाक्यानामध्यभावे साप्तदश्ये विवक्षिताप्राप्तेः सत्त्वादित्यव्याप्त्याक्षेप-समाधाने अस्माभिरस्य विधेर्विकल्पार्थत्वापादनेन केवलद्वारसम्बन्धमात्रबोधकत्वाभावेन परास्ते, तन्मूलयोः आक्षेप-समाधानयोरभित्तिचित्रकर्मायमाणत्वात्। अत्र चाक्षेपोपक्रमे नापीति तदुपसंहारे 'इति चेदिति' लिखितम्, तल्लेखकदोषादिति न्याय्यं कल्पयितुम्। प्राथमिकग्रन्थे न त्वित्येवोपक्रमे लिखितं स्यादिति द्रष्टव्यम्। एवमन्यत्रापि वाक्यसामंजस्यं लेखकमूलमेवेति वेदितव्यम्। किंचैवमव्याप्तिमात्रोद्धारेऽपि हन्त्याद्यतिव्याप्तिः स्थितैव।

यत्तु अत्यन्ताप्राप्तिपदेन सर्वोद्देश्यानुवृत्ताप्राप्त्यादिकं न विवक्षितम्। येनाग्निविध्यादिष्वव्याप्तयः स्युः। किंतु विधेयोद्देश्यसम्बन्धबोधकोपदेशत्वावच्छिन्नोपदेशाप्रवृत्तिव्यापकाप्राप्तिरेव विवक्षिता। तथा च न क्वाप्यव्याप्तिरिति। तदयुक्तम्। पूर्वोक्तोदुम्बरतानियमविधावतिव्याप्तेः। उदुम्बरताविध्यभावव्यापकत्वात् तदभावस्य।

एवं "नातिरात्रे षोडशिनं गृह्णाति, न भूपालैरनुत्सवे" इति परिसंख्या-विध्योरव्यतिव्याप्तिः। तत्तद्विध्यभावव्यापकत्वादग्रहण-नीलवस्त्रधारणाभावयोस्तथा प्रसिद्धपरिसंख्यायामेवातिव्याप्तिः। 'इमामगृभ्णन्नि'ति विधेः मन्त्रलिङ्गस्यापि विधेयोद्देश्यसम्बन्धबोधकप्रमाणत्वेन, उपदेशत्वेन च तदुभयाप्रवृत्तौ जपादावेव विनियोक्तव्यत्वेन मन्त्रस्य रशनाग्रहणे कथमप्यप्रसक्त्या तदभावस्य प्रकृतविध्यप्रवृत्तिव्यापकत्वात्।

न चैवमत्यन्ताप्राप्तिसत्त्वेऽपि मन्त्रपरिसंख्याफलकत्वेन तत्प्राप्तिफलकत्वाभावान्नातिव्याप्तिरिति वाच्यम्। लक्षणीयविधिमात्राप्रवृत्तितर्केण हि लिङ्गात्सम्भवन्तो मन्त्रप्राप्तिर्न फलं स्यात्। अत एवागत्या परिसंख्यापि फलं स्यात्, युष्मदुक्तरीत्या उपदेशमात्राप्रवृत्तौ तर्क्यमाणायां लिङ्गस्याप्यप्रवृत्त्या तदन्यस्मादसम्भवन्ती मन्त्रप्राप्तिः कथं फलं न भवेत्? तस्मिंश्च फले सति कथं वा परिसंख्याफलं स्यात्। फलान्तराभावे हि सा फलं स्यात्।

न तु वस्तुगत्या लिङ्गस्य सत्त्वात्ततः सम्भवन्ती प्राप्तिर्न फलमिति चेत्। तर्हि वस्तुगत्या 'इमामगृभ्णन्नि'ति विधेः सत्त्वान्मन्त्रलिङ्गस्यैवानवतारात्। मन्त्रप्राप्तिरन्यतोऽनवगतैवेति कथं न फलं स्यादिति, तत्रातिव्याप्तिरेव। तदभावेऽपि वा हन्यादावुद्धावितातिव्याप्तिर्दृढैव।

तथा कृष्णलचरुश्रपणादिप्रतिप्रसवविधावव्याप्तिः। न च कृष्णलेषु विक्लित्तिरूपद्वारासम्भवाप्रतिसन्धाने सति एतद्विध्यप्रवृत्तावपि श्रपणस्य प्राप्तिसंभवेन तदप्राप्तेर्विध्यप्रवृत्तिव्यापकत्वाभावात् सर्वत्र विधेयाप्राप्तेस्तर्कितत्वेन वास्तवाप्राप्तेर्विवक्षितुमशक्यत्वात्। न चाप्राप्तिः द्वारलोपप्रतिसन्धानकालीनत्वेन विवक्षितुमशक्या। प्रोक्षणविध्यव्याप्तिप्रसंगात्, देशतो व्यापकत्वं न सम्भवति इत्युक्तम्।

किंच "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते" इति नियमविधावव्यतिव्याप्तिः। एतद्विध्यप्रवृत्तिव्यापकत्वात् पत्नीसंयाजान्तताया अप्राप्तेः। तथाहि-यद्यपि द्वादशानामह्नां सहप्रयोगवचनात् पूर्वं पूर्वमहः कस्मिंश्चित्पदार्थेऽवस्थाप्य, परं परमुपक्रमितव्यम्, तथापि पत्नीसंयाजेष्ववस्थापनं पक्षेऽपि न प्राप्नोति। उपांश्वादि-हारियोजनान्तो हि सोमयागोऽहःशब्देनोच्यते। यथोक्तं तन्त्ररत्ने ज्योतिष्टोमेऽहःशब्देनोपांश्वादि-हारियोजनपर्यन्तः सोमयागः परिच्छिन्नः। इहापि द्वादशाहे एवं द्रष्टव्यमिति। तथा च सहत्वसिद्ध्यर्थं हारियोजनानन्तरमेवावस्थापनं प्राप्नोति। यदि तु वसतीवरीपर्यन्तानि

पूर्वाणि तन्त्रम्, अन्यकालत्वात्। अवभृथादीन्युत्तराणि तस्य दीक्षाविसर्गार्थत्वात् इति सूत्रोक्तरीत्या द्वादशाहे वसतीवरीपर्यन्तानां पूर्वेषाम्, अवभृथादीनामुत्तरेषां चांगानां तन्त्रत्वेऽपि भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात्, तेषां प्रधान-शब्दत्वात् ११-२-१-१० इति सूत्रोक्तन्यायेन प्रधानैककालान्यंगानि तत्त-त्प्रधानकालभेदेनानुष्ठेयानीति तत्तत्सुत्याकालिकानामैष्टिक-पाशुककर्मणां सांगानां तत्र तत्राहनि भेदेनानुष्ठानं प्राप्नुयात्। तथा कात्स्न्येन पाशुकैष्टिकप्रयोगसमाप्त्य-नन्तरमेवावस्थापनं प्राप्नोति। सर्वथापि पत्नीसंयाजानन्तरमेवावस्थापनस्य न पाक्षिकप्राप्तिरस्ति। तथा च "पत्नीसंयाजान्तोऽग्नीषोमीयः सन्तिष्ठत" इतिवत् अप्राप्तविधिरेवायम्। न च तथा सत्यपूर्वविधिरेवास्त्विति वाच्यम्। भाष्यादिषु नियमविधित्वेन स्वीकारात्। सहत्वनिर्वाहकतया दृष्टार्थतासत्वाच्च परिसंख्याक्षेपे-नियमोपन्यासस्तु यथाश्रुतभाष्याद्यनुसारेण मूले कृत इति ध्येयम्। तस्मादत्रातिव्याप्तिरेव।

ननु "द्वादशाहेन प्रजाकामं याजयेदि"त्यविकारविध्यवगतप्रयोगैक्य-निर्वाहस्य उपान्त्यपदार्थेऽवस्थापनादपि निर्वाहसम्भवेन ततः प्राचीनेषु पत्नी-संयाजादिषु अनियमेनावस्थापनं न प्राप्नोति। तेषां स्वस्वप्रधानप्रत्यासत्ति-बाधप्रसंगात् इति, नव्यवक्ष्यमाणनीत्या अप्राप्तविषयत्वमस्य विधेः कुतो नोपपाद्यत इति चेत्। उच्यते। एवमुपपादने यथा प्रधानप्रत्यासत्तिलिप्सया उपान्त्यपदार्थेऽवस्थापनं गमयति, तथा तन्मन्त्रेणानुष्ठेये द्वादशाहप्रयोगविधिर्ला-घवापेक्षी सन् येषां पदार्थानां प्रत्यहमनुष्ठानं विना तत्तदहर्निर्वृत्तिरेव न भवति, तान् ग्रहणादिपदार्थान् विना अन्येषां सर्वेषामपि पदार्थानामवस्थापनं गमयेत्। एवं च प्रयोगविध्यपेक्षितलाघवं ग्राह्यं वा, प्रधानप्रत्यासत्तिर्ग्राह्या वा इत्यत्र निर्णयकारणाभावेन न्यायद्वयस्यापि सत्प्रतिपक्षविधया मूकत्वे भाष्यकाराभिमतमनियतावस्थापनमेवापतेदिति अप्राप्तविषयत्वोपपादन-मस्मदुक्तरीत्यैव कर्तव्यमिति।

एवमन्यत्राप्राप्तविषये दृष्टार्थतया नियमविधावतिव्याप्तिरूह्या। यथा—सोमाभावे "पूतीकानभिषुणुयादि"ति। एतद्विध्यभावे सोमाभावे यथाशक्ति सोमशास्त्रा-नुग्रहार्थं बह्ववयवलिप्सया सदृशानामेव प्रतिनिधेयतया मन्दसदृशपूतीकानां प्रतिनिधेयत्वेन पूतीकाप्राप्तेः विध्यभावव्यापकत्वात्। अयमर्थो मूले निपुण-मुपादितस्तत्रैव द्रष्टव्यः।

एवमप्राप्तविषयपरिसंख्यायां "न जुहोती"त्यादावप्यतिप्रसङ्गो बोध्यः। एवमतिव्याप्त्यावहत्वादिमां विवक्षां त्यक्त्वा "सर्वोद्देश्यानुवृत्तिरि"त्यादि मूलदर्शितविवक्षैव कार्या। तत्र मूलदर्शिता अव्याप्तयः स्युरेव। यथा "त्रिधा एतं प्रजया पशुभिरर्द्धयति, वर्धयत्यस्य भ्रातृव्यम्, यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति, त्रेधा तण्डुलान्विभजेत्, ये मध्यमाः स्युः, तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्, ये स्थविष्ठाः, तानिन्द्राय प्रदात्रे दधंश्चरुं, येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमि"त्यत्र चतुर्दश्याममावास्याभ्रान्त्या दर्शोपक्रमं कृतवतस्तत्प्रायश्चित्तविधाने "त्रेधा तण्डुलान् विभजेदि"ति तण्डुलानां मध्यमादिभावेन त्रेधा विभागो न विधीयते। "ये मध्यमा" इत्यादिवाक्यैः तत्सिद्धेः। किन्तु सर्वेषां दार्शिकहविषां पूर्वदेवतापनयो विधीयते। "विभजेदि"त्युक्ते ह्ययमर्थोऽवगम्यते 'यानि संयुक्तानि तानि विभजेदि'ति। तण्डुलादिहवींषि च देवताभिः संयुक्तानि। अतस्तण्डुलशब्दो विभागकर्मत्वेनार्थप्राप्तदार्शिकहविर्मात्रोपलक्षक इति, तेषां पूर्वदेवतापनयो विधीयत इति युक्तम्।

अथवा 'मनुः पुत्रेभ्यो दायं व्यभजदितै.सं.३-१'ति प्रयोगदर्शनात्, इह दार्शिकहविषां वक्ष्यमाणदातृत्वादिगुणकाग्न्यादिदेवताभ्यो विभजनं-दानं विधीयते। पूर्वदेवतापनयस्त्वर्थसिद्धः—इति।

एवमर्थद्वयेऽपि तण्डुल-दधि-शृतेषु न विधेश्चारितार्थ्यम्। देवतान्तरसंयोजने पूर्वदेवतापनयस्य, विशेषतो विभजनेन सामान्यतो विभागस्य चार्थप्राप्तत्वात्। किन्तु तण्डुलशब्देन दार्शिकहविर्मात्रोपलक्षकेण लक्षित उपांशुयाजाज्ये तस्य मध्यमादिवाक्यानुपात्तत्वेन पूर्वदेवतापनय-सामान्यविभाजनयोरर्थप्राप्त्यभावात्। तत्फलं च पूर्वदेवतापनये देवतान्तराविधानादुपांशुयाजलोपः। सामान्यतो विभजने तु वक्ष्यमाणदेवताभ्यो विशेषाभावात् विभाज्यमानमुपांशुयाजाज्यमपीति। तथा च तण्डुलवाक्ये पूर्वदेवतापनयस्य, सामान्यविभजनस्य वा तण्डुलादौ मध्यमादिवाक्यादर्थप्राप्तत्वेन सर्वोद्देश्यानुवृत्ताप्राप्तिमदर्थप्रापकत्वाभावादव्याप्तिरिति।

इयमव्याप्तिराक्षेपाद्धेपे निरस्ता—नेयमव्याप्तिरस्ति। तण्डुलवाक्यस्यानुवादकत्वेनालक्ष्यत्वात्। न च उपांशुयाजाज्येऽप्राप्तापनयादिविधायकत्वाल्लक्ष्यत्वमिति वाच्यम्। अमावास्यायां तस्यैवासिद्धेः। "उपांशु पौर्णमास्यां यजन्नि"ति विधिना उपांशुयाजस्यामावास्यातो व्यावर्तितत्वात्—इति।

अत्र नव्याः—अमावास्यायामुपांशुयाजं कृत्वाचिन्तया तण्डुलवाक्यस्य विधित्वस्वीकारसम्भव इत्याहुः। अयं परिहारो न सहृदयहृदयङ्गमः। कृत्वा-चिन्तात्वाभ्युपगमेऽपि उदाहरणान्तरस्याप्यनभिधानात्, विश्वजितः स्थाने पितृयज्ञाद्युपन्यासवत्। यत्तु "प्रत्येकं द्रव्ययुग्मे न पटु घटयितुमि"ति ४१ श्लोकेन तण्डुलवाक्यवैयर्थ्यं दृढीकृतम्, तण्डुलवाक्यस्य देवतापनायकत्वं तदा स्यात्, यदि मध्यमादिवाक्यानि प्रकृतहविषां देवतान्तरविधायकानि स्युः। तदेवासिद्धम्। तेषां हि विष्णुदेवताविधायित्वे, देवतानां तासु दातृत्वादिगुणानां च विधेयत्वापत्त्या वाक्यभेदः स्यात्। दात्रादिशब्दानामग्न्यादिपदसामानाधि-करण्यात्। दातृत्वादिविशिष्टैकदेवताकारकविधानसम्भवेऽपि दधि—शृतवाक्ययोः स्थविष्ठाणिष्ठचरुत्वम्, दधि-शृताधिकरणत्वं च विधेयमिति वाक्यभेदः स्यादेव।

ननु अभ्युदयेष्टिप्रकरणे "सह श्रपयती"ति वाक्यमस्ति। तद्वैक्या-द्धि-स्थविष्ठयोः शृताणिष्ठयोश्च सहपाकविषयम्। तथा चाधिके दध्यादिद्रवद्रव्ये स्वल्पस्य तण्डुलस्य पाके चरुत्वं दध्यादेरधिकरणत्वं चार्थात्प्राप्नोतीति, न तत्कृतोऽपि वाक्यभेद इति चेत्। तस्य वाक्यस्यैवासिद्धेः। सिद्धौ वा दधिस्थविष्ठ—शृताणिष्ठरूपोद्देश्यभेदायत्तवाक्यभेदस्यापरिहार्यत्वात्।

किं च कर्मान्तरविधायित्वाभावे "यः पशुकामस्स्यात्, सोऽमावास्या-मिष्ट्वा वत्सानपाकुर्यात्, ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्। ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्, येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमि"ति काम्येष्टिकाण्डाम्नातपशुकामवाक्येन सारूप्यं च सम्भवद्बाधितं स्यात्, तस्य अपूर्वकर्मपरत्वस्य नवमे (९-४-१२) स्थितत्वात्। "वि वा एतं प्रजया पशुभिरर्द्धयती" त्युपक्रमवशात् पशुव्यृद्धिसम्पादनार्थतयाऽवगते कर्मणि पशुफलक-कर्मसारूप्यस्य सम्भवतस्त्यागानौचित्याच्च।

न च प्रकृतदर्शकर्मप्रत्यभिज्ञानबाध-विशिष्टविधिगौरवयोः प्रसङ्गात् प्रकृत एव देवतामात्रविधिरिति वाच्यम्। देवताविधौ वाक्यभेदापत्त्या प्रत्यभिज्ञा-बाधादेः स्वीकार्यत्वात्। अन्यथा "यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पंचशरावमोदनं निर्वपेदि"त्यार्तिवाक्ये दर्शप्रकरण एव श्रुते विशिष्टकर्मान्तरविध्यङ्गीकारो न स्यात्। तत्रापि वाक्यभेदमविगणय्य, विधिगौरव-प्रत्यभिज्ञाबाधयोरभावाय प्राप्तकर्मणि पंचशरावद्रव्येन्द्रदेवतयोर्विधिरित्यङ्गीकार्यत्वात्। तस्मान्मध्यमादि-वाक्यानां कर्मान्तरविधिपरत्वेन प्रकृतहविषि देवतान्तरविधायित्वाभावात् तण्डुलवाक्यं नानपेक्षितदेवतापनयविधिपरमित्यनुवादमात्रमिति।

अत्र नव्याः—प्रत्यभिज्ञाबाध-विशिष्टविधिगौरवयोः परिहाराय प्रकृत-हविषि नैमित्तिकदेवतान्तरमात्रविधानमङ्गीकुर्मः । सहश्रपणविधित्वलाच्च दधि-श्रृताधिकरणत्व-चरुत्वयोरनुवादाच्च तद्विधिकृतो वाक्यभेद इति वदन्ति ।

अत्र "सह श्रपयती"ति वचनमङ्गीकृत्यैव ब्रूमः, दुस्तरो वाक्यभेद इति । तथाहि "सह श्रपयती"ति वाक्यं न तावदन्वाहार्यस्यापि सहश्रपणं विधत्ते । वैशेषिकाभ्युदयेष्टिप्रकरणे अन्वाहार्यश्रपणस्याविधानात्, वैशेषिकप्रकरणाम्नातस्य विधेयस्य उद्देश्यतावच्छेदकसाधारण्येऽपि महाप्रकरणीयशेष्यन्वयायोगात् ।

अत एव अभिक्रमणं प्रयाजवैशेषिकप्रकरणगतं तदतिक्रमणेन महाप्रकरण-गतहोमान् न गच्छति । अत एव नोपांशुयाजाज्यस्यापि, एतत् प्रकरणेऽभा-वादेव । नापि मध्यमतण्डुलानाम्, तेषां प्रातिस्विककपालाष्टकश्रपणीयानाम्, द्रवद्रव्यैः सह पाकायोगात् । किन्तु दधि-स्थविष्ठयोः श्रृताणिष्ठयोश्च श्रपणे सहत्वं विधत्त इति वक्तव्यम् । तत्रापि दधिवाक्ये सहत्वं श्रपणे न विधत्ते । दध्नि श्रपणस्याप्राप्तत्वेनानुवादायोगात् । किन्तु अणिष्ठानां श्रृतस्य च श्रपणप्राप्तेः तदनुवादेन सहत्वं विधत्ते ।

न च तत्रापि सहत्वं न विधत्ते, सम्प्रतिपन्नदेवताकयोरणिष्ठ-श्रृतयोर्लाघवादेव पाके सहत्वप्राप्तेरिति वाच्यम् । तयोर्देवतासंप्रतिपत्तावपि उत्पत्तिशिष्ट-गुणावरोधेन सहत्वाप्राप्तेः । तथाहि—सिद्धान्ते तत्तद्यागार्थेष्वेव हविष्षु देवता-मात्रविकारः क्रियते । न च दधिस्थविष्ठद्रव्यकस्य कथं प्रकृतयागत्वमिति वाच्यम् । दधि-स्थविष्ठयोः प्रत्येकमेव द्रव्यत्वात् । तर्हि प्रदातृदेवताकयागद्वया-पत्तिरिति चेत् । इष्टत्वात् । एवमाद्ययागस्य त्रिरभ्यासोऽपीष्ट इति-दिक् । तथा च औषधद्रव्यस्य स्वसाध्ययागापूर्वप्रयुक्तकपालानां निवर्तकाभावात् कपालेष्वेव श्रपणम्, न कुंभ्यां श्रृतस्य । तथा च यदि लाघवमात्रेणाणिष्ठानां कुम्भ्यां श्रृतेन सह श्रपणं क्रियेत, तदौषधस्य स्वकीयकपालरूपगुणलोपः स्यात् । तस्मादप्राप्तं तत्र सहत्वं विधेयमेव । तथा च तत्राधिकरणत्व-चरुत्वयोरनुवादसम्भवेऽपि दधिवाक्ये कथं तयोरनुवादः ? येन वाक्यभेदोद्धारः, तत्र श्रपणवाक्येन सहत्व-विधानाभावात् ।

न च दधिवाक्येऽपि सहत्वं विधातुं शक्यम् । दध्नि श्रपणाप्राप्त्या तदनु-वादायोगात् । न च श्रपणविशिष्टं सहत्वं विधत्त इति युक्तम् । श्रृतवाक्ये सहत्वमात्रविधानेनोपपन्नस्य दधिवाक्ये विशिष्टविध्यंगीकारायोगात् ।

न चोभयत्रापि विशिष्टं विधेयम्, विधिगौरवादेव। अथापि श्रृतस्थले श्रपणविधिप्रयोजनाभावाच्च दधिवाक्ये विशिष्टम्, श्रृतवाक्ये केवलं सहत्वं विधत्त इत्यङ्गीकारेऽपि तदेव गौरवम्, विधिवैरूप्यं च।

एतेन—समानदेवत्येन हविरन्तरेण सह हविषः श्रपणे सहत्वं विधत्ते। तच्चत्र श्रपणमस्ति, श्रृताणिष्ठस्थले तत्र सहत्वमात्रे विधिः पर्यवस्यति, यत्र न, दधिस्थविष्ठस्थले, तत्र तु श्रपणमपि फलतीति दध्नोऽपि श्रपणं भवतीति परास्तम्। विधिगौरव-वैरूप्ययोस्तदवस्थत्वात्।

यत्तु प्रकृतेषु तण्डुलेषु पेषणप्राप्तेः, पिष्टानां च सतां दध्ना सह पाके चरुत्वविघातात्कथं तदनुवाद इत्याशंक्य, नव्यैश्चरुत्वानुवादः समर्थितः। श्रपणे स्थविष्ठानां सतां दध्ना साहित्ये, पुरोडाशस्य सम्पादयितुमशक्यतया पुरोडाशनिवृत्तौ तदर्थं पेषणमपि निवर्तत इति, न चरुत्वव्याघात इति।

तत्र शङ्कैवानुपपन्ना। पौष्णे पिष्टचराविवात्रापि पिष्टसाध्ये चरुत्वाविरोधात्परिहारोऽप्यनुपपन्नः। स्थविष्ठानां सतां पाक इत्यत्र प्रमाणाभावात्। येन पुरोडाशत्वनिवृत्त्यां पेषणं निवर्तेत।

न च चरुत्वानुवाद एव स्थविष्ठपाके मानम्। पिष्टावस्थपाके चरुत्वविरोधादिति वाच्यम्। पेषणेऽपि चरुत्वाविरोधस्योक्तत्वात्। चरुत्वानुवादबलात् स्थविष्ठावस्थपाकसिद्धिः। तत्सिद्धौ चरुत्वानुवादसम्भव इत्यन्योन्याश्रयापत्त्या चरुत्वस्य विधेयत्वापत्तौ वाक्यभेदस्य दुस्तरत्वापत्तेः। एवं च दधिवाक्ये उद्देश्यभेदादिव, विधेयभेदादपि वाक्यभेदः, दधि—श्रृतवाक्ययोः परस्परवैसादृश्यम्, उद्देश्यभेदकृतो वाक्यभेदः, पशुकामवाक्यवैसादृश्यमित्यमी दोषाः द्रष्टव्याः। तेनोद्देश्यभेदकृत एको वाक्यभेदो दोषः। प्रकृतकर्मणि देवताविधिपक्षे स चानेकदोषग्रस्तात् कर्मान्तरविधिपक्षाज्ज्यायानित्यपास्तम्, उभयत्र दोषबाहुल्यसाम्यात्।

किञ्चैवमप्यार्त्तिवाक्यप्रतिबन्द्यनुद्धारः। आर्तिवाक्ये बाधकान्तराभावात्प्रत्यभिज्ञाबाधम्, विधिगौरवं चांगीकृत्यावाक्यभेदाय कर्मान्तरविध्यङ्गीकारेऽपि "त्रेधा तण्डुलान् विभजेत्, सह श्रपयन्तोति वाक्ययोर्वैयर्थ्यं मा भूदिति सोढ्वाऽपि वाक्यभेदं नैमित्तिकदेवताविधिरंगीकार्यः। कर्मान्तरत्वे हि तण्डुलवाक्यं व्यर्थमिति स्पष्टमेव। श्रपणवाक्यमपि व्यर्थमेव। दधि-श्रृतयोरस्मिन् पक्षे प्रणीताकार्यविहितयोः हविषा सह श्रपणस्यार्थसिद्धत्वेनाविधेयत्वात्। हवि-

पामपि प्रातिस्विकदधि-शृतावस्थानां सह पाकायोगेन तत्रापि विधेयालाभात्। तस्माद्वाक्यद्वयवैयर्थ्याभावाय वाक्यभेदं सोढ्वा देवताविधिरेवांगीकार्य इति चेत्।

उच्यते। इहापि वाक्यवैयर्थ्याभावात्। न तावत् तण्डुलवाक्यं व्यर्थम्। त्रेधा विभागस्य मध्यमादिवाक्यपर्यालोचनयार्थसिद्धस्यापि बहिः प्रयोगेऽनुष्ठानं स्यात्। तस्यान्तःप्रयोगेऽनुष्ठानाय तण्डुलवाक्यस्य विभागविधायकत्वात्। न च व्रीह्यवस्थायामेवोपादाय, निरुप्य, प्रोक्ष्यावहत्य तण्डुलीकृतस्य विभागमात्रं बहिः प्रयोगे कथमनुष्ठीयेतेति वाच्यम्। देवताविधिपक्षे हि व्रीह्यवस्थायामेवोपादानम्। कर्मान्तरविधिपक्षे तु प्रकृतग्रहणे प्रमाणाभावेनोपादेयानां तण्डुलानां लोकत एव मध्यमादिभागेन विभक्तानामग्रहणे बाधकाभावादस्मिन् पक्षेऽकालोपक्रान्तदर्शकर्मणि त्यज्यमाने तदीयद्रव्यस्यावहननान्तसंस्कारविशिष्टस्यापि त्याज्यत्वात्।

न चापूर्वकर्मपक्षेऽपि श्रपणावश्यम्भावात्तन्मुखप्रवृत्तव्रीहिशास्त्रेण व्रीहिनिर्वापादिप्राप्तौ तन्मध्यगतस्य विभागस्य बहिःप्रयोगानुष्ठानं कथं स्यादिति वाच्यम्। अर्थाक्षिप्तस्याप्राकृतस्य केवलं बहिःप्रयोगानुष्ठानेऽपि बाधकाभावात्। अपूर्वकर्मणि दार्शिकहविःश्रपणपक्षेपि संस्कृतं दार्शिकमेव द्रव्यं स्वेच्छया प्रथममेव त्रेधा विभज्य, पश्चात्कर्मान्तरोपक्रमेऽपि बाधकाभावात्।

किञ्च अर्थसिद्धं विभजनमन्योऽपि कुर्यादित्यध्वर्युरूपकर्तृनियमार्थमपि विभागो विधेयः। विधाने हि अध्वर्युकाण्डसमाख्ययाध्वर्युः कर्ता लभ्यते।

न चैवमानर्थक्यं पुरस्कृत्यालक्ष्यत्वकथनं विहन्यत इति वाच्यम्। सिद्धान्त्यभिमतापूर्वविधित्वप्रकारखण्डन एव तात्पर्यात्। एवं नियमार्थत्वेऽपि तण्डुलवाक्यस्यापूर्वविध्यलक्ष्यत्वतादवस्थ्याच्च ।

नापि "सह श्रपयती" त्यस्य वैयर्थ्यम्। तस्यापि स्थविष्ठाणिष्ठचर्वोः सहश्रपणनियमविध्यर्थत्वोपपत्तेः।

न च तयोर्मिथः संसर्गापत्तिः, आग्रयणे नानाबीजानामेकस्यां पात्र्यामिव एकस्यामेव स्थाल्यामपवरकभेदकल्पनेन पाकोपपत्तेः।

अथवा अन्वाहार्यपाकसहत्वार्थं वचनमस्तु। तत्रापि प्रधानहविषामधिकरणं मा बाधीत्यन्वाहार्यस्य दक्षिणाग्निं बाधित्वा, आहवनीये, गार्हपत्ये वा हविर्भिः सहश्रपणसम्भवात्।

यद्वान्वाहार्यस्यैव कालतः सहत्वं विधत्ताम्। मा भूत्कस्याप्यधिकरणबाध इति।

ननु चात्रापि पक्षे प्रधानहविषां श्रपणकालबाधः स्यादिति चेत्। न। अनियतकालस्याग्वाहार्यपाकस्यैव हविःपाककालविधिपर्यवसानात्। एवं च नियमविधिश्चास्मिन् पक्ष आप्यत इति लाघवं च सिद्धान्तिरक्षात्। तस्मान्न कस्यापि वाक्यस्य वैयर्थ्यमिति कथं प्रतिबन्धुद्धारः।

किञ्चास्तु वैयर्थ्यं वाक्यस्य, तथापि न वाक्यभेदाः सोढव्याः। "तान् पर्यग्निकृतानुत्सृजती'त्यत्र "ब्रह्मसाम्न्यालभत" इति वाक्यविधेयप्राजापत्यपश्चालम्भोत्कर्षार्थप्राप्तद्विपयव्यापारोपरमानुवादत्वेन तदर्थवादिभूय ब्रह्मसामवाक्यैकवाक्यत्वे सम्भवति, ततो वाक्यभेदो मा भूदिति वैयर्थ्यस्वीकारात्। अर्थवादत्वमात्रेण साफल्यस्य तण्डुलवाक्य-श्रवणवाक्ययोरपि सम्भवाच्च।

अपि च यदि 'तान् पर्यग्निकृतानि'त्यत्र स्वस्य विधायकत्वप्रयुक्तमेकमेव वाक्यभेदं परिहर्तुं वैयर्थ्यमंगीकृतम्, तर्हि प्रकृते तादृशं वाक्यभेदं दधि-शृतवाक्ययोरुद्देश्यभेदकृतं चान्यं वाक्यभेदम्, दधिवाक्ये पूर्वोक्तरीत्याऽधिकरणचरुत्वयोरनुवादासम्भवेन तद्विधानापत्त्या तत्प्रयुक्तं चापरं वाक्यभेदम्; अत एव दधि-शृतवाक्ययोर्मिथः सारूप्यम्, पशुकामवाक्यासारूप्यं च परिहर्तुमर्थप्राप्तविभाग-सहश्रपणानुवादेन पर्यवसन्नयोस्तण्डुल-सहश्रपणवाक्ययोर्वैयर्थ्यं कथं नांगीक्रियेत।

किञ्च यदि वैयर्थ्यपरिहाराय विध्यन्तरमंगीकृत्य वाक्यभेदोऽंगीक्रियते। तर्हि 'यदि सत्राय दीक्षितानां सास्युत्तिष्ठासेत्, सोममपभज्य विश्वजिता यजेते'त्यत्रापि सोमापभागवाक्येन सोमापभागोऽपि विधेय इत्यंगीक्रियताम्। कृतमतिक्लिष्टं पाक्षिकानुवादत्वमंगीकृत्य। तस्माद्वैयर्थ्येऽपि वाक्यभेदायोगात् वैयर्थ्यस्यैवाभावात् च दृष्टान्तवैषम्याभावात्। कथं हविरार्तिवाक्यप्रतिबन्धुद्धारः।

किञ्च मध्यमादिवाक्यानि प्रकृतहविषि देवतान्तरविधायकानि तदा स्युः,यदि प्रकृतहविषां देवता न स्युः। देवताभावश्चापचाराद्यनुकीर्तनाद्वा वाचनिकविभजनाद्वा स्यात्। तत्र न तावदपचारकीर्तनमस्ति। नापि दोषोद्घाटनमस्ति। येन दुष्टदेवतायाः प्रच्युतं हविर्देवतान्तरमाकांक्षेत्। यथा "वायव्यं श्वेतमालभेत भूतिकामः' इति वाक्येन वायुयुक्तमपि श्वेतहवि'स्सैनमीश्वरा प्रदह' इति वाक्यान्तरेण वायौ दाहसमर्थत्वरूपदोषकीर्तनात्, वायोः प्रच्युतं सत् 'वायवे नियुत्वत आलभेते'ति वाक्यान्तरेण देवतान्तरेण सम्बध्यते। नापीह वाचनिकं विभजनमस्ति। तद्धि तण्डुलवाक्यस्वरसाद्वा प्रमाणान्तराद्वा। स्वारस्यं तु

नास्त्येव। प्रमाणान्तरमपि मध्यमादिवाक्यानां देवतान्तरविधायकत्वान्यथानुपपत्तिरेव वाच्यम्। सा हि देवतान्तरविधानस्य पूर्वदेवतासम्बद्धे हविष्ययोगेन पूर्वदेवतापनयापेक्षायां तण्डुलवाक्ये तण्डुलशब्दस्य विशेषपरस्य दार्शिकहविः–सामान्यपरत्वम्, विभागपदस्य सामान्यपरस्य पूर्वदेवताप्रतियोगिकविभागविशेषपरत्वं च कल्पयित्वा तण्डुलवाक्यं देवतापनयं कुर्यात्। तत्तु न सम्भवति, अन्योन्याश्रयात्। मध्यमादिवाक्यानां देवतान्तरविधायकत्वे सिद्धे तद्बलादुक्तविधया तण्डुलवाक्येन पूर्वदेवतापनयः सिध्येत्।

एवं तण्डुलवाक्येन पूर्वदेवतापनये सिद्धे, अपनीतदेवताकानां हविषां देवताकांक्षानुसारान्मध्यमादिवाक्यानां देवतान्तरविधायकत्वसिद्धिरिति। तस्मान्मध्यमादिवाक्यैर्देवतान्तरविधायकत्वसिद्धिरिति। तस्मान्मध्यमादिवाक्यैर्देवतान्तरविधानासम्भवादनपेक्षितमेव विभजनं तण्डुलवाक्येन कर्तव्यं स्यात्।

एवं मध्यमादिवाक्यैरनपेक्षितमेव देवतान्तरविधानं कर्तव्यं स्यादित्यपि द्रष्टव्यम्।

यत्तु—"सह श्रपयती"त्यस्य वैयर्थ्यभीत्यैव मध्यमादिवाक्यानां देवतान्तरविधायकत्वं निश्चिनुमः। तद्बलादेव तण्डुलवाक्यस्यापि पूर्वदेवतापनायकत्वं सिध्यतीति नान्योन्याश्रयः–इति।

तदयुक्तम्। तद्वैयर्थ्याभावस्य कर्मान्तरविधिपक्षेऽपि दर्शितत्वाद्वाक्यभेदभिया वैयर्थ्यमपि सोढव्यमित्युक्तत्वाच्च।

किञ्च मध्यमादिवाक्यानां देवतान्तरविधायकत्वेऽर्थसिद्धः पूर्वदेवतापनयः तण्डुलवाक्येन न विधातव्यः स्यादिति, तण्डुलवाक्स्य त्वत्पक्षेऽप्यानर्थक्यमेव। न च तण्डुलाद्यंशे अर्थसिद्धत्वेऽपि उपांशुयाजाज्येऽर्थसिद्धत्वाभावात्तदंशेऽपनयविधिरर्थवानिति वाच्यम्। तदंशेऽपि विभजनपरमिदं वाक्यमित्यत्र प्रमाणाभावात्। मध्यमादिवाक्यैर्येषां देवतान्तरसंयोगः क्रियते, तेषामेव हविषामपनयापेक्षिततया तत्रैव तण्डुलवाक्यस्य देवतापनायकत्वौचित्यात्।

न च तण्डुलशब्दस्य लक्षणया दधि–शृतपरत्वे प्रकृतमेवोपलक्ष्यतावच्छेदकम्। तच्चाज्यसाधारणमिति वाच्यम्। प्रकृतत्वस्योपलक्ष्यतावच्छेदकत्वानभ्युपगमात्। लक्षणाकल्पनार्थमुपजीव्यतया प्रथमोपस्थितमध्यमादिवाक्यसंयुक्तहविष्ट्वस्यैव उपलक्ष्यतावच्छेदकत्वौचित्यात्। उद्देश्यतावच्छेदकसाधारण्येऽप्यपेक्षितविषयत्वेन विधिलाघवे सम्भवति, अनपेक्षितोपांशुयाजाज्यदेवतापनयपरत्वायोगात्।

अत एव यजुष्षु प्रयोगकालेऽनियतस्वरप्राप्तौ कः स्वरः प्रयोक्तव्यः इत्यपेक्षास्ति। तन्मात्रविषयत्वमङ्गीक्रियते। परसम्बोधनकार्यानुरोधादुच्चैः-स्वरतया सिद्धत्वेन स्वरविशेषापेक्षारहितनिगदसाधारणयजुष्ट्वरूपोद्देश्य-तावच्छेदकमुखप्रवृत्ते "उपांशु यजुषे"ति विधौ, न तु तत्र लाघवादरं हित्वा उद्देश्यतावच्छेदकाक्रान्तत्वान्निगदेऽपि उपांशुत्वप्रापकत्वमपि। तस्मादुपांशु-याजस्यामावास्यायामभ्युपगमेऽपि "सह श्रपयती"ति वचनाभ्युपगमेऽपि मध्यमादिवाक्यानामनेकदोषदुष्टदेवताविधायकत्वाभ्युपगमेऽपि तण्डुलवाक्यं लक्षणयापि नोपांशुयाजाज्यविषयतया साफल्यं भजते।

एतेन—तण्डुलवाक्यं दार्शिकहविषां वक्ष्यमाणदेवताभ्यः सामान्यतो विभजनपरमस्तु। तण्डुलादीनां वक्ष्यमाणदेवताभ्यो विभजनस्य-दानस्य मध्यमादिवाक्यादेव सिद्धावपि उपांशुयाजाज्ये तदसिद्धेः, तदर्थततया विधि-साफल्यमिति परास्तम्। दार्शिकहविष्ट्वस्य तण्डुलपदलक्ष्यतावच्छेदकत्वासं-भवस्योक्तत्वात्।

किञ्चैवं सति औषधवदाज्यवद्दधि-शृतयोरपि वक्ष्यमाणसर्वदेवतान्वयः स्यात्, प्रथमप्रवृत्तविधिस्वारस्यानुसारादेव। अग्रिमवाक्ये दधि-शृत-कीर्तनस्यानुवादत्वोपपत्तेः। अथवा दधि-शृतग्रहणं स्थविष्ठैरणिष्ठैश्च तण्डुलैः सहश्रपणनियमार्थमस्तु।

न च "सह श्रपयती"ति वाक्यादेव तस्य सिद्धतया तत्फलकत्वायोगे देवताविशेषनियमार्थत्वस्यैव वाच्यतया तद्विरोधान्न दधि-शृतयोः सर्वदेवतान्वयः इति वाच्यम्। अग्रे दधि-शृतग्रहणाभावे सहश्रपणवचनेनापि एकस्यामेव स्थाल्यां युगपत् श्रपणापत्त्या विधित्सितस्य दधिस्थविष्ठ—शृताणिष्ठपाकसाहित्य-स्याप्राप्त्या तदर्थं दधि—शृतग्रहणस्यावश्यकत्वात्। यदि सर्वेषां सहपाके एक-चरुत्वापत्त्या श्रुतं दधि-शृतयोः साधनत्वं भज्येतेति भयम्, तद्दधि-स्थविष्ठयोः सहपाकेऽपि तुल्यम्। यदि च पाकविधानाद् दध्नः प्रणाड्या साधनत्वमेवाभि-मतमिति, तदपि तुल्यम्।

एवं मध्यमादिवाक्यानां कर्मान्तरविधिपरत्वावश्यम्भावे तण्डुलानामुपा-देयत्वेन प्रकृतग्रहणे कारणाभावात् "ये मध्यमाः" इत्यादौ यच्छब्दस्य सतोऽपि द्रव्य-देवताशिष्टकर्मविधौ तण्डुलानामुद्देश्यत्वापादनासमर्थतया पशुकामवाक्यगत-यच्छब्दवदविवक्षितार्थताया एव प्राप्तिरिति प्रकृतप्रत्यभिज्ञाऽकिञ्चित्करी। प्रत्यभिज्ञानुग्रहे आर्त्विवाक्यप्रतिपन्द—वाक्यभेदादिबहुदोषापातात्।

स्यादेतत्। मध्यमादिवाक्यानि न कर्मान्तरविधिपराणि। आतञ्चनाभ्यास-लिङ्गदर्शनविरोधात्। तथा हि-"यदि बिभीयादभिमोदेष्यती"ति, महारात्रे हवींषि निर्वपेत्, फलीकृतैस्तण्डुलैरुपासीत, अर्द्धं दधि हविरातंचनाय निदध्यात्, अर्धं न, यद्यभ्युदियात्तत् तेनातञ्च्य प्रचरेत्, यदि न, अन्येद्युस्तेन ब्राह्मणं भोजयें-दि"ति शाखान्तरे श्रूयते। अस्यार्थः—किमद्य मया चतुर्दश्याममावास्याभ्रान्त्या दर्शः प्रारब्धः? किं चन्द्रमा अभ्युदेष्यतीति शङ्कया भयं प्राप्नुयात्। महत्या-मेव रात्रौ व्रीहीन्निरुप्यावहत्य, फलीकृत्य उदीक्षमाण आसीत, सायं दोहसंपादितं च दधि द्वेधा विभज्य, एकमर्धं मुख्यकाले करिष्यमाणदर्शार्थे तत्पूर्वदिने संपाद्य, दध्यातञ्चनाय निदध्यात्, अर्धान्तरं तदर्थं न निदध्यात्। एवं कृते यद्यभ्युदयस्स्यात्, तदा मुख्यकाले दर्शप्रारम्भानन्तरमातञ्चनार्थं निहितेनार्द्धेन दध्ना सायं दुग्धे पयस्यातञ्चनं कृत्वा दध्युत्पाद्य, अन्येद्युर्दधियागं निर्वर्तयेत्। यदि नाभ्युदयः, तदानी-मातञ्चनार्थं निहितादर्धादन्येनार्धेन दर्शनिर्वृत्तेः। तदर्थं दध्युत्पादनानपेक्षणेना-तञ्चनार्थं निहितमर्धं ब्राह्मणभोजनेन प्रतिपादयेत्—इति। तदेतदातञ्चनाभ्यास-दर्शनमभ्युदयेष्टेः कर्मान्तरत्वपक्षे नोपपद्यते। कर्मान्तरस्य लौकिकदधि-पयोभ्यां निर्वर्तनीयतया क्वाप्यविनियुक्तेन पूर्वविभक्तदध्नैवाकालकृतेनापि प्रायश्चित्तनिर्हृत-कालापराधदोषेण मुख्यकाले दर्शनिर्वृत्तिसम्भवे तदर्थदध्यन्तरोत्पादनस्यैवान-पेक्षणादिति चेत्। न। अकालकृतेन दध्ना एकदिनान्तरितस्य दर्शस्य कर्तुम-युक्तत्वेन तदर्थं दध्न्युत्पादयितव्ये आतञ्चनाभ्यासस्योपपन्नत्वात्।

नन्वकालकृतस्यापि दध्नः प्रायश्चित्तनिर्हृतकालापराधदोषत्वात्कर्माङ्गत्व-मस्तीति चेत्। न। स्तेयप्रायश्चित्तेन स्तेयदोषनिर्हरणेऽपि स्तेयलब्धद्रव्यस्येवाभ्युद-येष्ट्या दर्शस्याकालकृताग्निप्रणयनदेवता "यादृक् तादृक् च होतव्यमि"त्येवमिहा-श्रवणात्।

नव्यास्त्वाहुः—कर्मवैगुण्यसमाधानार्थं हि प्रायश्चित्तम्। कर्म च द्रव्य-देवतात्मकम्। अतः कर्मदोषनिर्हारकेण द्रव्यदोष एव निर्ह्रियत इति। अत्र ब्रूमः सत्यं द्रव्यदेवतात्मकं कर्म। तस्य तु यदंशपुरस्कारेण दोषः कीर्तितः, तत्समा-धानेनैव कर्मसाद्गुण्यार्थेयमिष्टिरित्यविवादम्। दोषस्तु कर्मणो विहितकालविरह-निमित्तक एव कीर्तितः। "विवा एनं प्रजया पशुभिरर्द्धयति, वर्धयत्यस्य भ्रा-तृव्यम्, यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेती"ति विहितामावास्याकाल-विरहव्याप्यपूर्वदिक्चन्द्रोदयकीर्तनात्। एवं चेष्ट्याऽकालकृतदोषकीर्तनात्तद्गत-दोषनिर्हरणं कथं सिध्येत्।

यद्यपि नव्यैरुक्तम्—स्तेयप्रायश्चित्तस्य पुरुषार्थत्वाद्द्रव्यस्य कर्मार्हत्वानापादकत्वेऽप्यभ्युदयेष्टेः क्रत्वर्थत्वाद्द्रव्यस्य कर्मार्हतापादकत्वं सम्भवतीति।

तदयुक्तम्। इष्टेः क्रत्वर्थत्वेऽपि द्रव्यदोषनिर्हारकत्वे प्रमाणाभावादभ्युदयेष्टेरपि पुरुषार्थताया वक्तुं शक्यत्वात् "वि वा एनमि"त्यादिना प्रजा-पशुव्यृद्धेर्दोषस्य कीर्तनात्, तत्समाधानस्य पुरुषार्थत्वात्, तस्य कर्मण्यनुपयोगात् "यस्य हविर्निरुप्तमि"त्यत्र यच्छब्देन पुरुषप्राधान्यप्रतीतेश्च।

ननु तर्हि कालोपक्रमकृतं कर्मवैगुण्यमसमाहितं स्यादिति चेत्। तवापि तत्कृत एव पुरुषापराधोऽसमाहितः स्यात्। स्मृत्युक्तप्रायश्चित्तं पुरुषेण कर्तव्यमिति चेत्। त्वयापि सामान्यत उक्तं सर्वप्रायश्चित्तादि कर्तव्यमिति दिक्।

वस्तुतस्तु—आतञ्चनाभ्यासलिङ्गदर्शनं विपरीतमित्यपि शक्यं वक्तुम्। यद्यभ्युदयेष्टिः दर्शकर्मैव स्यात्, तदा हि देवतारूपगुणविकारेणापि तदैवानुष्ठितमिति, पुनस्तदनुष्ठानकारणाभावेनातञ्चनाभ्यासप्रसक्तेरेवाभावात्।

न च तदेवानुष्ठितमप्यकाले कृतमकृतप्रायं मत्वा, मुख्यकाले प्राप्ते पुनस्तदनुतिष्ठेदिति वाच्यम्। प्रायश्चित्तेन देवतारूपगुणविकारादिमात्रेण सिद्धान्तिनः कालदोषनिर्हरणात्, अकृतप्रायत्वशंकानवकाशात्।

ननु तथापि मासान्तरीयदर्श इव एतद्दिनान्तरितेऽपि दर्शे प्राप्ते तत्काले जीवता तत्कर्तव्यमिति क्रियत इति चेत्। न। मासान्तरीयदर्शप्रयोगमकृतमिति कुर्यात्। कृतमेव त्वेतद्दर्शप्रयोगं पुनः कथं कुर्यात्। "क्रोधिसंवत्सरफाल्गुनबहुलामावास्याप्रयोगं करिष्ये" इत्येव हि पूर्वेद्युश्चतुर्दश्यां सङ्कल्प्य, परेद्युरमावास्यायामेवानुष्ठितवान्। न तु मासादिविशेषमनुल्लिख्य, येन तत्कालीनकर्मानुष्ठानशङ्कापि स्यात्। अभ्युदयेष्टेः कर्मान्तरत्वे त्वकालप्राप्तं दर्शकर्मोज्झित्वा, लौकिकदध्यादिना कृत्स्नामभ्युदयेष्टिं तत्प्रायश्चित्तत्वेन निर्वर्त्य, स्वकाले दर्शप्रयोगमननुष्ठितमेवानुतिष्ठः सत्यपि पूर्वसम्पादिते सायंदोहे गृहीतपरित्यक्तमित्यनुशयेन नूतनस्य दध्यन्तरस्योत्पादनप्रसक्तावातञ्चनाभ्यासदर्शनमुपपद्यते।

नन्वेवं तवान्वाधानादिरभ्युदयेष्टिः कर्तव्या स्यात्, न तु हविर्विभागप्रभृतिः। तत्र याज्ञिकाचारविरोध इति चेत्। न्यायावलम्बनेन प्रवृत्तानां तस्यादोषत्वात्। अन्यथा सिद्धान्तेऽपि दध्नो हविषां प्रणीताकार्ये विहितत्वाभावेन तत्र तत्र याज्ञिकसंमतस्य "समापो अद्भिरग्मते"ति प्रणीतामन्त्रे "सन्दधि दध्ने"त्याद्यूहस्याकर्तव्यत्वानापत्तेः।

यदपि प्रकृतदधिग्रहण उपायान्तरं नव्यैरुक्तं "यद्वा स्तेयलब्धद्रव्यस्य स्वत्वाभावेन कर्मार्हत्वाभावेऽप्यकालकृतस्यापि दध्नः सम्भावितसकलदोषनिर्हरणार्थप्रायश्चित्तनिर्हृतसकलदोषस्य कर्मार्हत्वे बाधकाभावात्स्वकाले कर्तव्यदर्शे सम्भवत्युपयोगः" इति।

अत्र ब्रूमः। सत्यमेवमुपयोगसम्भवे भवत्यातञ्चनाभ्यासलिङ्गविरोधः, किन्तु तादृशं प्रायश्चित्तं नेयमेव अभ्युदयेष्टिः, तस्यास्तादृशसामर्थ्ये मानाभावात्, किन्तु सर्वप्रायश्चित्तादिकं तथा वाच्यम्। तद्यदि गृहीतोज्झितमपि स्वार्थतया प्रधानसन्निहितकाले सम्पादितवत्सापाकरणादि सर्वसंस्कारवर्जितं सिद्धरूपमपि दधि कर्मार्हीकुर्यादिति, तदर्थवत्सापाकरणादिकं त्यक्त्वा दर्शकर्माभ्युदित्रे कुर्यात्, तदा अभ्युदयदोषरहितोऽपि कालान्तरेऽपि दर्शकर्म सिद्धं दध्यवष्टभ्यं कुतो न कुरुते, स यदि सत्यां शक्तौ प्रायश्चित्तमस्त्विति बलेनाङ्गलोपो न युक्त इति सिद्धं दध्युपेद्य, वत्सापाकरणप्रणाड्यैवोत्पादयेत्, तर्ह्यभ्युदयदुष्टोऽपि तथैवोत्पादयेत्।

यदि गृहीतोज्झितं दधि प्रतिपत्तिमपेक्षते, अपेक्षताम्। तत्प्रधान एव त्यक्ते कर्मणि तदप्रतिपादनेन कस्य वैगुण्यं स्यात्। एतावदभ्युदयेष्टेः कर्मान्तरत्वपक्षे प्रकृतहविर्ग्राहित्वं नास्तीति भाष्यकारोक्तरीत्योक्तम्।

वस्तुतस्तु—प्रकृतान्येव कर्मान्तरत्वेऽप्यभ्युदयेष्टेर्हवींषि। तथापि—तण्डुलास्तावन्त एव। अन्यथा महारात्रे निरुप्यावहत्य, तण्डुलीकृत्य, तण्डुलभावविघातकं पेषणाद्यकृत्वा, तदवस्थायामेवाभ्युदयप्रतीक्षणस्यादृष्टार्थत्वापत्तेः। तथा दध्यपि तदेव आतञ्चनार्थं दध्यर्धस्य उदय-तदभावयोरातञ्चन-ब्राह्मणभोजनरूपप्रतिपत्तिवदन्यदध्यर्धस्यापि प्रतिपत्तेर्वक्तव्यत्वात्। वक्तव्यावचनेनार्धान्तरस्य प्रतिपत्त्यपेक्षा नास्तीति गम्यते। तेन च प्रकृतकर्मणि विनियुक्तत्वं गम्यते। शृतमपि तदेव। शृतवाक्ये प्रातर्दोहरूढशृतशब्दप्रयोगात्। एवञ्च प्रक्रान्तहविषामभ्युदयेष्टौ विनियोगाद्भाविदर्शे हविरन्तरोत्पादनायातञ्चनाभ्यासोऽस्त्येवेति तत्र पूर्वक्तदध्यर्धनियमने न किञ्चिदनुपपन्नम्।

न च प्रकृततण्डुलग्रहणे चोदकावगताङ्गभावानां निर्वापादीनां पुनः कर्तुं शक्यानामकरणे प्रधानस्य गुणलोपप्रसङ्गादप्रकृतग्रहणमेव न्याय्यमिति वाच्यम्। दृष्टार्थपरश्रौतलिङ्गानुसारात् तण्डुलादीनां हविष्ट्वे निश्चिते, तत्र लुप्तद्वाराणां निर्वापादीनां कृष्णलचरावघातादीनामिवार्थलोपादेव चोदकनिवृत्त्या वैगुण्याप्रसक्तेः। प्रत्युत सिद्धान्तिन एवात्र वैगुण्यमापतति। तथाहि—दात्रग्न्यादयो देवताः प्रकृतिसंयोगिनः सत्योऽपि नैमित्तिकत्वान्नित्याग्न्यादि-

विकारा एव फलचमसवत्। तत्रा"ग्नये जुष्टं निर्वपामि, प्रोक्षामी"त्यादि-मन्त्रपदेषु "अग्नये दात्रे जुष्टं निर्वपामी"त्याद्यूहेन नैमित्तिकदेवताभिधानं चोदकादनङ्गतया प्राप्यते, तत्परित्यागाद्देवता विगुणास्स्युरिति।

केचिदाहुः—अन्यार्थतयावगतानां तण्डुलादीनां विधिदृष्टार्थत्वादिमात्रेणाहृत्य वचनं विनात्र विनियोगोऽनुपपन्नः। लिङ्गान्यप्यभ्युदयेष्टेः प्रकृतकर्माभेदेऽप्युपपद्यते। तथाहि—तण्डुलभावान्तावस्थापनमभ्युदयेष्टेः कर्मान्तरत्वे लौकिकदधिसाध्यत्वात्, तस्यामनुपयोगाददृष्टार्थं स्यादिति दृष्टार्थत्वायैव तस्याः प्रकृतकर्मत्वं कल्पयेत्। तथा आतञ्चनार्थान्यदध्वर्यस्याभ्युदयपक्षे प्रतिपत्त्युपवर्णनमपि तत्रैव लिङ्गम्। तस्याः कर्मान्तरत्वे लौकिकदधिसाध्यायां तस्यामनुपयोगेन प्रतिपत्त्याकाङ्क्षानुच्छेदात्। तस्याः प्रकृतकर्मत्वे तु तत्रैवोपयोगात्प्रतिपत्त्याकाङ्क्षोच्छिद्यते।

एवं पयश्शब्दे प्रयोक्तव्ये शृतशब्दप्रयोगोऽपि तदैक्यं गमयतीति। तदयुक्तम्। वचनं विनापि दृष्टार्थत्वादिभिरेवान्यार्थतयावगतानां तण्डुलानां स्वप्रधानकर्मणि कालापराधदोषात्त्यक्ते ततः प्रच्युतानामाकीर्णकराणां प्रतिपत्तिसाकाङ्क्षाणां प्रकृतमप्रकृतं वा किञ्चिद्द्रव्यं नियमेनापेक्षमाणे क्वचित्कर्मणि सन्निहिते सति, तत्र विनियोगस्य न्याय्यत्वात्।

अत एव "अग्नीषोमीयं पशुमालभेत" इति विधिना विशसनादिवाक्यसहितेनावयवान्तरवदग्नीषोमीययागसंबन्धित्वेनावगताया हृदयादिवाक्यपर्यालोचनया हृदयादीनामेवाग्नीषोमयागे हविष्ट्वव्यवस्थितौ ततः प्रच्युताया आकीर्णकरायाः प्रतिपत्त्याकाङ्क्षया जाघन्याः उपादेयतया प्रकृतामप्रकृतां वा यां काञ्चिज्जाघनीमपेक्षमाणे "जाघन्या पत्नीस्संयाजयन्ती"ति विधिविहिते जाघनीयागे सन्निहिते सम्बन्धः सम्प्रतिपन्नः।

लिंगानि चास्मदुक्तान्येवानुगुणानि। तथाहि—सत्यं फलीकरणान्तावस्थापनं दृष्टप्रयोजनमपेक्षत इति। तत्राभ्युदयेष्टेः प्रकृतकर्मत्वं कल्पयामः, प्रकृतहविर्ग्राहित्वमात्रं वा। उभयथापि दृष्टार्थत्वानिर्वाहात्किं प्राप्तप्रकृतहविर्ग्राहित्वमात्रं कल्पनीयम्। तावतैव फलीकरणान्तावस्थापनदृष्टार्थत्वस्य वाक्यभेदादिदोषशवशात्कर्मान्तरत्वेन निश्चितायामभ्युदयेष्ट्यामनियतद्रव्याकाङ्क्षिण्यामपेक्षितद्रव्यविशेषनियमलाभेन तदपेक्षाशान्तेश्च लाभात्, प्रकृतद्रव्यग्रहणे कर्मान्तरस्य वैगुण्याभावाच्च। प्रकृतकर्मत्वकल्पने तु मध्यमादिवाक्येषु वाक्यभेदप्रसङ्गात्। एवमेव दधि-शृतवाक्ययोरप्यूह्यम्। तस्माल्लिङ्गदर्शनविरोधाभावादिना कर्मान्तरमेवाभ्युदयेष्टिरिति तत्राप्यस्याक्षेपः सुदृढ एव।

अत्र च विधिरसायने प्रतिबन्ध्यभिधानप्रस्तावे हविरार्तिवाक्ये व्याजेन कर्मान्तरपरत्वसिद्धान्तोऽपि खण्डितः। "यदि सत्राय दीक्षितानां साम्युत्तिष्ठासेदि"त्यधिकरणावष्टम्भेन सोमापभागवदैन्द्रत्वस्यापि पाक्षिकानुवादविषयत्वे सम्भवति, प्रकृतहानादेरयुक्ततया प्रकृतकर्मण्येवार्तदोहप्रतिनिधित्वेन पञ्चशारवद्रव्यमात्रविधानोपपत्तेरिति। तथैतदधिकरणावष्टंभेन "यदि सत्राये"त्यधिकरणसिद्धान्तखण्डनमपि सूचितम्। ऐन्द्रवत्सोमापभागस्यापि पाक्षिकानुवादायोगात्। सोमक्रयणानन्तरमेव साम्युत्तिष्ठासोर्विश्वजित्प्रायश्चित्तं वक्तव्यमिति। अत्र सिद्धान्तिभिरपि नव्यैर्न कश्चित्परिहार उक्त इति ध्येयम्।

एव"मुच्चैः ऋचा क्रियते" इति नियमविध्यतिव्याप्तिरपि द्रष्टव्या। स हि विधिर्ऋग्वेदविहितमन्त्रेष्वनियतस्वरप्राप्तावुच्चैस्त्वनियमविधिस्तत्रोद्देश्ये कर्मणि विधेयोच्चैस्त्वाप्राप्तेः प्रकृतविध्यप्रामाण्यप्रयोजकविध्यन्तराप्रयोज्यत्वात्, विध्यप्रवृत्तिव्यापकत्वाच्च।

नव्यास्त्वाहुः—नेयमतिव्याप्तिः, विवक्षितरूपाप्राप्तिसत्त्वेऽपि तस्य विधेरङ्गभूतमन्त्रेष्वप्राप्तांशपरिपूरणफलकत्वेनोच्चैस्त्वप्राप्तिफलकत्वाभावादिति।

तन्न। तद्विधेर्मन्त्रेष्वप्राप्तांशपूरकमात्रत्वेऽपि कर्मणि कथमप्यप्राप्तस्योच्चैस्त्वादेः शेषशेषिभावसम्बन्धेन प्राप्तिफलकत्वात्।

न च तथापि तत्रानुष्ठानविशेषाभावात्तस्य नापूर्वविधिलक्ष्यत्वमिति वाच्यम्। यतः कर्माङ्गत्वादेवोच्चैस्त्वादिस्वरस्य तद्भेदेऽङ्गलोपप्रायश्चित्तम्, न तु कर्माङ्गमन्त्रगुणलोपमात्रमिति कृत्वा, अङ्गलोपप्रायश्चित्तं क्रियत इति द्रष्टव्यम्।

यच्चात्र परिहारान्तरं तैरेवोक्तं—यस्य विधेयस्य यस्मिन्नुद्देश्ये येन रूपेणान्वययोग्यता, तत्र तस्य तेन रूपेणात्यन्ताप्राप्तेर्विध्यप्रवृत्तिव्यापकत्वादिकं विवक्षितम्। प्रकृते च कर्मसु मन्त्रद्वारेणैवोच्चैस्त्वादेरन्वययोग्यतेति, तेन रूपेण तत्र तदप्राप्तेर्विध्यप्रवृत्तिव्यापकत्वाभावान्नातिव्याप्तिरिति, तदपि तत एवापास्तम्। कर्मसूच्चैस्त्वादेरुक्तशेषशेषिभावेनाप्यन्वययोग्यत्वात्। तेन रूपेण तदप्राप्तौ विध्यप्रवृत्तिव्यापकत्वसत्त्वात्।

किञ्चैवं विवक्षायामपि "हिरण्यगर्भस्समवर्तताग्र इत्याघारमाघारयति, इषे त्वेति छिनत्ति, उत्करे वाजिनमासादयति, परिधौ पशुं नियुञ्जीते"त्यादिनियमविधिष्वतिव्याप्तिः। मन्त्रयोराधारे छेदने च प्रकाश्य-प्रकाशकभावेनान्वययोग्यता, तादृशाप्राप्तेरेतद्विध्यप्रवृत्तिव्यापकत्वात्। उत्करस्य पृष्वग्रत्वेन वाजिनासादने, परिधेश्च प्रथिम्ना नियोजनेऽन्वययोग्यता। तत्तद्रूपेण तदप्राप्त्योश्च विध्यप्रवृत्तिव्यापकत्वात्।

एवं नियमार्थेष्वभावे विधिष्वव्यतिव्याप्तिः। यथा—"उच्छेषणाभावे तण्डुलैरातंच्यात्, तण्डुलाभावे ओषधीभिरि"त्यादौ। अत्र हि तण्डुलादेरुच्छेषणाद्यभावनिमित्तकत्वेनान्वययोग्यता। तेन रूपेण तदप्राप्तिश्च विध्यप्रवृत्तिव्यापिकैव।

अपि चैवं विवक्षायामव्याप्तिश्च स्यात्। यत्र विधेयाप्राप्तिर्योग्यरूपेण प्रकृतविध्यप्रवृत्तिव्यापिका न भवति। यथा—"एष ह वै हविषा हविर्यजते, योऽदाभ्यं गृहीत्वा, सोमाय यजते"त्यत्र। अत्र हि हवीरूपस्य सोमस्यैव देवतात्वम्। तस्य च कर्मणोऽदृष्टरूपत्वात्, प्रदेयतया सम्बन्धोऽदृष्टरूपदेवतात्वसम्बन्धादपि योग्यः। तत्र सोमद्रव्यके कर्मणि तस्य तेन रूपेण प्राप्तेरेवाभावाद्विध्यप्रवृत्तिव्यापकाप्राप्तिमत्त्वं नास्ति।

एवं लतारूपं सोमं प्रणीयमानमग्निञ्च देवतात्वेन स्वीकृत्य प्रवृत्ते "अग्नीषोमीयं पशुमालभेते"ति विधावप्यव्याप्तिः। अत्राग्निस्त्यज्यमानहविराधारत्वेनान्वययोग्यः, तेन रूपेण तस्य यदाहवनीयवाक्यात्तत्र प्राप्ततया विध्यप्रवृत्तिव्यापकाप्राप्त्यभावात्।

ननु एतद्विध्यप्रवृत्तौ तर्क्यमाणायां कर्मण एवाप्रसिध्या तत्र तस्मात्प्राप्तिरप्यस्तीति चेत्। न। अनयोर्विध्योरभावेऽपि "अदाभ्यं गृह्णाती"ति वाक्यान्तरेणादाभ्यस्योत्पत्तिसम्भवाद्घृदयादिवाक्येन पशुयागोत्पत्तिसम्भवाच्च। अग्नीषोमीयवाक्य एव पशूत्पत्तिस्वीकारेऽप्यदाभ्याव्याप्तिर्दृढैव।

यद्युच्यते–यत्र यस्य येन रूपेण प्राप्तिर्विधिफलम्, तद्रूपावच्छिन्नाप्राप्तिः विवक्षिता। अदाभ्यादौ देवतात्वेन प्राप्तिर्विधिफलमिति तद्रूपाप्राप्तिसत्त्वान्नाव्याप्तिरिति। तद्युच्चैस्त्वादौ क्रियाशेषत्वेन प्राप्तिर्विधिफलम्। तन्निर्वाहायैव तदङ्गावतारात्। हन्त्यादेश्चापूर्वीयत्वेन प्राप्तिः फलमिति तद्रूपेणाप्राप्तिसत्त्वात्तत्रातिव्याप्तिः स्यात्। सोमाभावे "पूतीकानि"त्यत्रातिव्याप्तिरुक्तैव।

तां नव्याः परिहरन्ति–यद्यप्येतद्विध्यप्रवृत्तिदशायां सोमलतासु सदृशानामन्येषामेव बह्ववयवानुग्रहाय प्रतिनिधितया प्राप्तेः, ईषत्सदृशानां पूतीकगतावयवानामत्यन्ताप्राप्तिरेव,

तथापि पूतीकगतावयवाप्राप्तेर्लक्षणीयविध्यप्रामाण्यप्रयोजकबह्ववयवविधायकसोमशास्त्रप्रवृत्तिप्रयोज्यत्वेन तदप्रवृत्तिप्रयोज्यत्वाभावादिति।

तदयुक्तम्। एतद्विध्यप्रवृत्तौ पूतीकाप्राप्तेः "सति बह्वयवानुग्रहसम्भवे नाल्पावयवानुग्रहः कार्यः" इति न्यायप्रयुक्ततया सोमशास्त्रप्रयोज्यत्वाभावात्।

न हि पूतीकगतानामवयवानामपि प्रापकमेव सोमशास्त्रं तदप्राप्तिप्रयोजकमपि भवति, विरोधात् । एवं चाप्राप्तेर्न्यायप्रयोज्यत्वेन विध्यन्तराप्रयोज्यतया तत्राति-व्याप्तिरनिवार्या ।

अस्तु वा सोमशास्त्रप्रयोज्या पूतीकाप्राप्तिः । अथापि सोमशास्त्रे लक्षणीय-विध्यप्रामाण्यप्रयोज्यत्वाभावात्तदप्राप्तिर्न विशिष्टाभावसत्त्वादतिव्याप्तिः । स्वानु-ग्राहकपूतीकशास्त्राप्रामाण्यप्रयोज्यत्वमशक्यशङ्कम् । तदा तदप्रामाण्याप्रयोज-केति प्रकृतपाठविरोधश्च । पाठे नञो लेखकमूलत्वेऽतिव्याप्त्यनुद्धारः ।

यदि मतं सुसदृशसाधारण्येन सोमत्वजातिपरिच्छेद्यत्वयोग्यावयवमात्र-साधनताबोधकसोमशास्त्रस्यापि प्रतिनिधिनियमशास्त्रवद्विधेयोद्देश्यसम्बन्ध-बोधकोपदेशकोटौ प्रविष्टत्वेन तदप्रवृत्तिदशायां क्रियाविधिना द्रव्याक्षेपदशायां पूतीकावयवानामपि कदाचित्प्राप्तिसत्त्वेनात्यन्ताप्राप्त्यसत्त्वान्नातिव्याप्तिरिति ।

तदप्ययुक्तम् । सोमशास्त्रस्याप्यभावे क्रियाक्षेपात्स्वेच्छया किमपि द्रव्यमुपाददानः पूतीकान्यदि पश्येत्, तानेव तद्गतावयवेभ्यः स्थूलतरत्वाज्झटिति बुद्धिस्थानुपाददीत, तद्गतावयवग्रहण इव तद्ग्रहणे कर्मसाद्‌गुण्यं नास्तीति प्रतिसन्धानस्य सोमशास्त्रस्य तर्कणदशायामसम्भवात् । तथा च तद्गतावयवानां प्राप्तिरेव ।

किञ्चैवमुत्पत्तिशिष्टसोमस्य विधायकशास्त्राभावे चिन्त्यमाने कर्माप्य-लीकं स्यादिति, केन कर्मणा पूतीकावयवा आक्षिप्यन्ते, येन पक्षप्राप्तिस्तेषु स्यात् ।

अपि चैवं क्रियासामान्यविधेरपि द्रव्यसामान्याक्षेपकत्वेन सोमशास्त्र-वत्सामान्याकारेण प्रकृतपूतीकगतावयवकर्मसम्बन्धबोधकतया तस्याप्यभाव-स्तर्कणीयः सोमशास्त्रवत् । तथा च पूतीकगतावयवानां कर्मण्यत्यन्ताप्राप्तिरेवेति तत्रातिव्याप्तिर्वज्रलेपायते । अनया दिशा हन्त्यादावतिव्याप्तिर्दर्शिता साधन-रूपेणेति विवक्षायामपि नापैतीति द्रष्टव्यम् ।

हिरण्यगर्भ इत्यादौ दृष्टार्थत्वादुपद्रष्टृवचनादिनाप्यनुष्ठेयस्मृतिसंभवे मन्त्रविधाने मन्त्रनियमादृष्टकल्पनस्यावश्यकत्वाच्च नियमविधित्वावश्यम्भा-वेऽत्यन्ताप्राप्तविषयत्वमात्रेण "औदुम्बरो यूपो भवती"ति वैकृतोदुम्बरविधाविव लक्ष्यत्वाभिधानमनादेयम् ।

अत एव 'दृष्टार्थो यः स सर्वो नियमविधिरि'ति सिद्धान्तोपक्रमे मूल एवोक्तम् । अप्राप्तांशपरिपूरणफलकविधेरेव नियमविधित्वे दूषणं नियम-विधिखण्डनावसरे वक्ष्यामः ।

यदपीदमेवास्वारस्यं हृदि निधाय नव्यैः परिहारान्तरमुक्तम्, लक्षणीयविध्यप्रामाण्यप्रयोजकप्राकृतैन्द्रमन्त्रविध्यन्तरप्रयोज्यत्वाद्धिरण्यगर्भमन्त्राप्राप्तेः, तद्प्रयोज्यत्वरूपविशेषणविशिष्टलक्षणाभावान्नातिव्याप्तिरिति ।

तदप्ययुक्तम् । हिरण्यगर्भमन्त्रस्य हि ऐन्द्र उत्तराघारे सामर्थ्याभावप्रयुक्तैवाप्राप्तिः, न तु प्राकृतैन्द्रमन्त्रविधिकृता । तद्विधौ सत्यसति वाऽप्राप्नुवतः लक्षणीयविधौ सत्येवैतद्बलादेव गौणसामर्थ्यमप्युपजनय्य प्राप्नुवतो हिरण्यगर्भमन्त्रस्याप्राप्तिः, एतद्विध्यप्रवृत्तिमात्रप्रयुक्तेत्यस्य स्पष्टत्वात् । एवं च विवक्षितप्राप्तिसत्त्वादतिव्याप्तिरेव ।

अत्रापि विशेष्याभावादागतं विशिष्टाभावमप्रामाण्यप्रयोजकत्वविशेषणाभावेन यद्दृढीकरोति, तत्प्रकृतासङ्गतमिति ध्येयम् ।

ननु "इषे त्वेति शाखामाछिनत्ति" इत्यादिकल्प्यक्रियापदनियमविधिषु नोक्तातिव्याप्तिः । एतद्विध्यभावेऽपि "इषत्वे"ति मन्त्रस्य क्रियापदाकाङ्क्षानुरोधाद्यत्किञ्चिदनियतक्रियापदाध्याहारे कदाचित् "छिनद्मि" पदस्याप्यध्याहारसम्भवेनेहोश्यछेदने प्रकाशकत्वेन पक्षप्राप्तिसत्त्वेनात्यन्ताप्राप्त्यभावादिति चेत् । मैवम् । स्वयमप्यर्थं प्रकाशयितुमसमर्थस्यास्य मन्त्रस्य दर्शपूर्णमासप्रकरणगृहीतस्यापि ज्योतिष्टोमादिप्रकरणगृहीतानां साम्नामिवोच्चार्यमाणत्वमात्रेण जपमन्त्रात्मना विनियोगसम्भवेनार्थप्रकाशनापेक्षाया एव विरहेण पदान्तराध्याहारस्याप्यप्रसक्तावुद्देश्यप्रकाशकत्वेनात्यन्ताप्राप्तिसत्त्वात् ।

न च कारकपदमात्रश्रवणादाकांक्षयास्त्यक्रियापदाध्याहार इत्युक्तमिति वाच्यम् । अर्थबोधनार्थत्वे निश्चित एव हि वाक्येषु तत्तदुचितपदाध्याहारः । प्रकृते चार्थपरत्वनिश्चयः "इषे त्वेति छिनत्ती"तीतिकरणत्वेन विधिबलादेव लभ्यः । अनुष्ठेयं प्रकाशयतो मन्त्रस्य करणत्वायोगात् । एतद्विध्यप्रवृत्तितर्कणदशायां च तादृशबलाभावान्नार्थप्रकाशनार्थत्वनिश्चयः । प्रकरणं तूच्चारणमात्रेणाङ्गतां स्वीकृत्य विरमतीत्युक्तम् । शब्दाभावात्क्रियापदापेक्षात्वसिद्धैव । ईदृशे साकाङ्क्ष एव वाक्येऽश्रद्धेयवचसा बालोन्मत्तादिनोक्ते तदाकांक्षाशान्त्यर्थं तदुचितपदाध्याहारव्यसनं न कस्याप्युपलभामहे । तस्मादध्याहाराप्रसक्त्या तत्रातिव्याप्तिरेव ।

"उत्करे वाजिनमासादयति, परिधौ पशुं नियुञ्जीते"ति नियमविध्योरतिव्याप्तिं नव्याः परिहरन्ति—यस्य येन रूपेण यस्मिन्नन्वयो विधिफलम्, तस्य तेन रूपेण तदप्राप्तेर्विधेयोद्देश्यसम्बन्धबोधकोपदेशत्वावच्छिन्नोपदेशाप्रवृत्तिव्यापकत्वमप्राप्तेरात्यन्तिकत्वं विवक्षितम् । प्रकृते च तादृशप्रकृत-

विध्यप्रवृत्तेः "वेद्यां हवींष्यासादयति, यूपे पशुं नियुञ्जीते"ति विध्यप्रवृत्तिदशायामपि सम्भावितत्वेन तद्दशायां स्थौल्यविशिष्टत्वाकारेणोत्कर-परिध्योः कदाचिदासादन-नियोजनयोः पाक्षिकप्राप्तिसत्त्वेनात्यन्ताप्राप्त्यभावान्नातिव्याप्तिरिति।

तदयुक्तम्। एवं विवक्षायां "उच्चैर्ऋचा क्रियते, व्रीहीनवहन्तो"त्यादावुच्चैस्त्वावहननादेः कर्मव्रीह्यादौ शेषत्वापूर्वीयत्वादिना प्राप्तिर्विधिफलम्। तद्रूपाप्राप्तावुक्तव्यापकत्वसत्त्वादतिव्याप्तिः स्यादित्युक्तमेव।

तथा प्रतिप्रसवविधौ "घृते श्रपयती"त्यादावव्याप्तिश्च स्यात्। एतद्विध्यप्रवृत्तौ द्वारलोपाप्रतिसन्धानकालीनायां चोदकवशादर्थाक्षेपाद्वा श्रपणप्राप्तिसम्भवेन तदप्राप्तौ विवक्षितकालिकव्यापकत्वाभावादित्यपि दर्शितमेव।

एवं साङ्ग्रहणीविधावप्यव्याप्तिरूह्या। तत्राप्युपदेशाप्रवृत्तौ विश्वजिदधिकरणसिद्धान्तन्यायास्फुरणकालीनायां तदीयपूर्वपक्षन्यायस्फुरणे ग्रामफलस्यापि पक्षप्राप्त्या विधेयाप्राप्तौ विवक्षितात्यन्तिकत्वाभावात्।

तस्मादेतद्विवक्षाया दुष्टत्वात्, यथाश्रुताव्याप्तिर्दृढैव। भवद्रीत्याऽपूर्वविधौ "औदुम्बरो यूपो भवती"त्यत्राप्यव्याप्तिः। उदुम्बरताया अप्राप्तेः प्राकृतखदिरत्वादिविध्यप्रवृत्तिकालेऽपि सम्भावितामुपदेशाप्रवृत्तिं प्रति व्यापकत्वाभावात्।

तदेवमुक्तविवक्षाणां दर्शितवहुदोषत्वादन्यासामस्मदुत्प्रेक्षितानामप्यस्माभिरेव दूषितत्वात्प्रकारान्तरेणोत्प्रेक्षिष्यमाणानामपि विवक्षाणां विधिरसायनदर्शितोदाहरणेष्वेवाव्याप्त्यतिव्याप्तिप्रदर्शनैः सुखनिरस्यत्वात्, न कथंचिदपूर्वविधिलक्षणं समर्थयितुं शक्यम्।

नियमविधि–परिसंख्याविध्यन्यत्वे सति विधित्वमित्यादिलक्षणोत्प्रेक्षायां "विधिरत्यन्तमप्राप्त" इत्याचार्यलक्षणाक्षरार्थलेशस्याप्यननुवृत्तेर्नवमश्लोकावतारिकादर्शितरीत्याऽऽश्रयभेदादिनाऽपूर्व-नियमविध्यात्मनानेकविध्यात्मकविधिषु विध्यन्तरभेदासम्भवेनाव्याप्त्यापत्तेश्च। अन्यलक्षणयोरपि दूषितत्वेन तद्घटितत्वे-असम्भवस्यैव प्राप्तेश्च न कथंचिदपूर्वविधिलक्षणं शक्यसमर्थनमित्यास्तां तावत्।

इतिश्रीमल्लबोम्मकुलार्णवपूर्णचन्द्र-चिन्नमाम्बागर्भशुक्तिमुक्ताफल-ब्रह्मण्यविरुदाङ्कित-चोक्कनाथभूपालप्रियसचिव-चिन्नबोम्मभूपालहृदयकुहरविहरमाणसांवशिवप्रेरितेन चिन्नाप्पय्यदीक्षितेन विरचितायां दुरूहशिक्षायामपूर्वविधिलक्षणाक्षेपसमुद्धारभङ्गो नाम पञ्चमस्तरङ्गः।

## अथ नियमविधिलक्षणाक्षेपसमुद्धारभङ्गो नाम षष्ठस्तरंगः।

यद्विधिरसायने दूषितं नियमविधिलक्षणम्, तत् नव्याः समर्थयन्ते—अप्राप्तांशपरिपूरणफलकविधित्वं नियमविधित्वम्। अस्ति च लक्षणमिदं "व्रीहीनवहन्ती"त्यादौ। एतद्विध्यभावे दार्शपौर्णमासिकव्रीहिषु विदलनस्यापि प्राप्तौ योऽवहननाप्राप्तांशस्तत्पूरणस्यैव विधिफलत्वात्। अवघातप्राप्तिमात्रस्य लोकावगतस्य फलत्वासम्भवात्। न चैवं सार्वकाम्यविधावतिव्याप्तिः। प्रातिस्विकवाक्येन स्वर्गार्थत्वे प्राप्ते तस्य तदप्राप्तफलान्तरांशपरिपूरणार्थत्वादिति वाच्यम्। प्रकृतविध्यप्रवृत्तिदशायां प्राप्तिसमानाधिकरणाप्राप्तेरेवाप्राप्तांशपदेन विवक्षितत्वात्। तथा च सर्वकामविध्यप्रवृत्तिदशायां फलान्तरस्यात्यन्ताप्राप्तत्वेन प्राप्तिसमानाधिकरणाप्राप्तेरभावान्नातिव्याप्तिः-इति।

तदयुक्तम्। कर्मणि हि फलानां प्राप्तिः। तथा च स्वर्गरूपफलस्य यत्र ज्योतिष्टोमादिकर्मणि प्राप्तिः प्रातिस्विकविधिना, तत्रैव तदतिरिक्तफलानां प्राप्त्या प्राप्तिसामानाधिकरण्यमप्राप्तावस्तीत्यतिव्याप्तितादवस्थ्यात्।

अथोच्येत—प्राप्तिसमानाधिकरणपदं प्राप्तिसमानकर्तृकत्वपरम्। तथा च यः स्वर्गं प्राप्नोति, न स न प्राप्नोति। यश्च न प्राप्नोति, तद्भिन्नफलांशः स हि न प्राप्नोत्येवेति एकस्यैव प्राप्त्यप्राप्त्योरभावान्नातिव्याप्तिरिति चेत्। तदपि न। "याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमार्जयेत्" इत्यत्रोपायनियमेऽव्याप्तिप्रसङ्गात्। यत्र यज्ञ-दानाध्ययनविधिभिः कर्त्राकाङ्क्षयोजनाध्यापन-प्रतिग्रहसमर्थमात्राक्षेपे ब्राह्मणानां याजनादौ नाप्राप्तिः, याजनादिसामर्थ्याविघातात्। किन्तु ब्राह्मणानां स्वकीयार्थोपार्जनसाधनत्वेन याजनादिषु स्वयमेव प्रवणत्वात्क्षत्रियाद्यपेक्षया झटिति विशेषरूपेणोपस्थिता इति कृत्वा, तैरेव सम्बध्यशान्तकर्त्रन्तराकाङ्क्षैर्यज्ञादिविधिभिः क्षत्रियाद्यसम्बंधाद्वा ब्राह्मणा एव याजनादिकर्तार इति नियमः पर्यवसितः। तथा च तत्रोपायत्वेन नियम्यानां ब्राह्मणानां याजनादिष्वप्राप्ति-प्राप्त्योरभावादव्याप्तिः।

न चैवं परिसंख्याविधिरयं स्यात्, न नियमविधिः। ब्राह्मण-क्षत्रियादिषु समुच्चित्य प्राप्नुवत्सु क्षत्रियादिव्यावर्तनादिति वाच्यम्। ब्राह्मणानामपि नित्यप्राप्त्यभावादनिच्छया कदाचिदप्राप्तेरपि सत्त्वात्।

न च "ब्राह्मणो याजनादिभिरेवार्जयेदि"त्युक्त्या कृष्याद्युपायान्तरप्रच्यवाद्याजनादौ नित्यं प्राप्नुयादिति वाच्यम्। तावता याजनादिषु नित्यप्राप्त्यभावात्। न हि रागाभाव आर्जनं कुर्वतः प्रत्यवायः, किन्तु "रागे सति याजनादिभिरेवार्जयेदि"ति नियमः।

नन्वेवं सति ब्राह्मणानां प्राप्त्यप्राप्त्योः सम्भवादव्याप्तिः प्रत्युद्धृतेति चेत्। सत्यम्। राग-तदभावाभ्यां हि ब्राह्मणस्य प्राप्त्यप्राप्ती उपपादिते। नैते नियमविधिप्रयोजिके। एकनियमेनापीतरकोट्यनिवृत्तेः। तस्माद्ब्राह्मणनियमेन क्षत्रियाणां व्युदासात् ब्राह्मण-क्षत्रिययोरवहनन-विदलनयोरिव प्राप्त्याप्राप्ती वक्तव्ये, न च तत्सम्भवति। याजने विषयभेदेनोभयोः प्राप्तिसम्भवात्।

यद्युच्येत एकस्यां याजनादिव्यक्तौ ब्राह्मण-क्षत्रिययोरेकस्यां व्रीहिव्यक्तावहनन-विदलनयोरिवैकेन कार्यनिष्पत्तावितरवैफल्यादस्ति तत्रैकैकस्य प्राप्तिरप्राप्तिश्चेति नाव्याप्तिरिति। न। व्यक्तिभेदं पुरस्कृत्योद्देश्यतावच्छेदकावच्छिन्ने प्राप्त्याप्राप्ती वक्तव्ये इति दृष्ट्याऽव्याप्तिदानात्। न हि सम्भवत्युक्तातिव्याप्तिपरिहारार्थमेव व्यक्तिविशेषे प्राप्त्यप्राप्ती एव लक्षणघटके इति कल्पनम्, अतिव्याप्तिप्रसंगात्। तथाहि "इमामगृभ्णन्नि"त्यादिमन्त्रस्यैकस्यां व्यक्तौ नाश्व-गर्दभरशनाग्रहणयोरपि समुच्चित्य प्राप्तिः सम्भवति, क्षणावस्थायिन्या मन्त्रव्यक्त्या क्रमानुष्ठेययो रशनाग्रहणयोर्युगपदनुष्ठापयितुमशक्यत्वात्, किन्तु मन्त्रत्वावच्छिन्न एव ग्रहणयोः समुच्चित्य प्राप्तिः। तत्तद्व्यक्तौ त्वनियमेनाश्वरशनाग्रहणं वा गर्दभरशनाग्रहणं वा प्राप्नोति। एवञ्च मन्त्रव्यक्तिविशेषेऽश्वरशनाग्रहणस्य प्राप्त्यप्राप्ती विद्येते इति, तत्रातिव्याप्तिप्रसङ्गः। तस्मादतिव्याप्तिपरिहारार्थमिमां विवक्षां हित्वा, उद्देश्यतावच्छेदकावच्छिन्ने प्राप्त्यप्राप्ती विचार्ये। तत्र चोक्तरीत्या अव्याप्तिरेव।

नन्वयं मा भून्नियमविधिः। "ब्राह्मणो याजनादिभिरेवार्जयेदि"त्यत्र क्लृप्तादृष्टव्यतिरेकेण ब्राह्मणैरेवार्त्विज्यादि कर्तव्यमित्यत्र नियमादृष्टान्तरस्याकल्पनात्। प्रत्युत परिसंख्यैव न्याय्या। "नानृतं वदेदि"त्यादिस्थलेऽनृतवचनादिभ्य इव प्रकृतप्रतिकोटिभूतक्षत्रियादिकर्तृकयाजनादौ प्रत्यवायसम्प्रतिपत्तेरिति चेत्। मैवम्। यथाहि व्यावर्तितविदलनसिद्धवैतुष्यस्य द्रव्यस्य कर्मानर्हताप्रयोजकं दुरितापूर्वं कल्प्यते। विदलितव्रीहिसिद्धपुरोडाशस्य कर्मानर्हत्वात्। तथा व्यावर्तितक्षत्रियादिकर्तृकयाजनसिद्धद्रव्यस्यापि कर्मानर्हता-

प्रयोजकं वा तादृशकर्मकारिष्वेतेष्वेव नरकप्रयोजकं वा दुरितापूर्वं प्रकृते कल्प्यताम् । सिध्यतु नियमविधिलाघवम् । भवतु च सर्वे कारकविधयो नियमविधय इति सिद्धान्तप्रवादोऽपि दृढः, अनाकुलं तु "दृष्टार्थो यः स सर्वो नियमविधिरिति दीक्षितेन्द्रवचनम् ।

अथ नियमस्य फलापेक्षायां तत्रैव फलं कल्पनीयं सन्निहितत्वात् । न तु दवीयस्यामितरनिवृत्तौ । अत एवावघातनियमाददृष्टं कल्प्यते, यत्र तु व्यावर्तिताचरणे दुरितापूर्वम्, तत्र विधिः परिसंख्यैव । यथा "नानृतं वदेदि"त्यादि ।

ननु चात्र विधिलाघवात्कश्चिद्गुणानुनिष्पादितफलत्वान्नियमस्य कारकत्वम् । दृष्टार्थविधित्वं च रशनाग्रहणपरिसंख्यायामेवानैकान्तिकम् । "इमामगृणन्नि"त्यस्य करणकारकत्वादर्थप्रकाशनरूपदृष्टार्थत्वाच्चेति चेत् । अस्तु तावदेवम्, आकरव्यवहारानुरोधादव्याप्तिर्दत्ता, लक्ष्यत्वोपपादनं तु हन्त्यादाविव सिद्धान्तिनैव कर्तव्यम् । तत्रापि प्राप्त्यर्थत्वम्, परिसंख्यार्थत्वं वेति दर्शितम् ।

अथवाऽलक्ष्यत्वमुपपादयामः । "याजनाध्यापनेत्यादि प्रकृतविध्यप्रवृत्तौ विशेषतो ब्राह्मणानामुपस्थित्यभावात् । यद्यपि यज्ञादिविधिभिस्त्रैवर्णिकमात्रमाक्षिप्यते, ब्राह्मणवत् क्षत्रिय–वैश्ययोरपि वेदसंयोगेन सामर्थ्याविशेषात्, तथापि न यज्ञादिषु ब्राह्मणानां नित्यप्राप्तिः, क्वचिद्यज्ञविशेषे क्षत्रियैरेव वा वैश्यैरेव वा निर्वर्तनसम्भवेन तत्र यज्ञविशेषे ब्राह्मणानामपि नित्याप्राप्तेरपि सम्भवात् । तथा च तत्र नोक्ताव्याप्तिरपीति चेत् । मैवम् । क्वचिद्यविशेषे ब्राह्मणादीनामाध्वर्यव-हौत्रादिविषयभेदेन समुच्चयस्यापि संभवेनोद्देश्यतावच्छेदकावच्छिन्ने समुच्चयाकरम्बितत्वविवक्षाभावे "पञ्च पञ्चनखा" इति प्रसिद्धपरिसंख्यायामतिव्याप्तिप्रसङ्गात् । तत्रापि क्वचिद्भक्षणे कूर्मादि–वानरादिसमुच्चयसम्भवेऽपि भक्षणान्तरे वानरादिभिरेव साध्यमाने कूर्मादेरप्राप्तेरपि सम्भवेन कूर्मादिष्वपि प्राप्त्याप्राप्तिसत्त्वेनातिव्याप्त्यापत्तेः । तस्मात्तत्रातिव्याप्तिपरिहाराय क्वचिदपि समुच्चयाकरम्बिते एव प्राप्त्याप्राप्ती विचार्ये । तथा चात्राव्याप्तिरेव ।

किञ्च सार्वकाम्यविध्यतिव्याप्तिरेव । स्वर्गकामविध्यप्रवृत्तिसहितायां सार्वकाम्यविध्यप्रवृत्तौ यावज्जीवविधि-विश्वजिन्न्याययोरप्यनवतारे तदधिकरणपूर्वपक्षरीत्या सर्वफलसम्बन्धस्याहारपृथक्त्वन्यायेनैकैकप्रयोगे एकैकफलके सति फलान्तरसम्बन्धाभावस्यापि सत्त्वात्फलान्तरासम्बन्धो यावज्जीववाक्यावतारदशायां स्वर्गकामवाक्यावतारदशायां वापि सुखोपपादः ।

अथात्र कालभेदेन प्राप्त्यप्राप्ती आदायातिव्याप्तिपरिहारायैकस्मिन् काले तदुभयं लक्षणप्रविष्टं कल्पयाम इति चेत्। चित्रेष्ट्यादिफलविध्यतिव्यापनात्। तत्र यस्य पशुफलस्यैकस्मिन्नेव काले चित्रेष्टावप्राप्तेरुद्भिदादौ प्राप्तेश्च सत्त्वात्।

अथाप्युच्येत-उद्देश्यैक्यमपि विवक्षितम्। तथा च एकस्यैव नियम्यस्यैकदैकस्मिन् प्राप्त्यप्राप्त्योः सत्योर्विधिर्नियमविधिरिति चेत्। न। सार्वकाम्यविधावेवातिव्याप्तेः। दर्श-पूर्णमासयोस्तस्मिन्नेव काले पश्वादिफलस्यैव पुरुषभेदेन प्राप्त्यप्राप्त्योः सम्भवात् प्रतिपुरुषमिच्छाया विचित्रत्वात्।

अथ पुरुषैक्यमपि तन्त्रम्, तर्ह्यव्याप्तिस्स्यात्। क्रियाविध्याक्षेपाद्धि व्रीहि-यवादिमिश्रितोऽपि पुरोडाशः कदाचित्प्राप्नोति, तत्र व्रीहयो नियम्यन्ते "व्रीहिभिर्यजेते"ति। तत्र तस्यां दशायां व्रीहीणां मिश्रीकरणाय प्राप्ततयाऽप्राप्त्यभावात्।

न च तत्र तयोः समुच्चित्य प्राप्तौ व्रीह्यन्यद्रव्यपरिसंख्यैव "व्रीहिभिर्यजेत, यवैर्वा यजेते"त्यादिभिः क्रियत इति वाच्यम्। तत्रैव प्रयोगे नीवारादेरपि प्राप्त्या व्रीहीणां नित्यप्राप्त्यभावेन नियम्यत्वस्यैव वक्तव्यत्वात्। कथं तर्हि व्रीह्यादिविधिः नियम्याभावस्थले नियम्यं गमयन् नियम्यानियम्यमेलनस्थलेऽपि तद्गमयेत्? आवृत्तिप्रसङ्गादिति चेत्। न। एकरूपेणैव व्रीह्यप्राप्तांशे सर्वत्र व्रीहिं गमयन्विषयभेदेऽपि नावृत्तिं गच्छेत्। तथा चैककालविवक्षायां तत्राव्याप्तिरेव।

तथा "प्राङ्मुखोन्नानि भुञ्जीते"त्यादावव्याप्तिः। पुमिच्छाया अनियतत्वेन कालभेद-प्राङ्मुखत्वयोः प्राप्तौ तद्विधिप्रवृत्तेः कालभेदविवक्षात्यागे तु "नानृतं वदेत्, नागम्यां गच्छेदि"त्यादावप्यतिव्याप्तिः। अनृतवदनादितदभावयोः कालभेदेन प्राप्तानृतविवक्षादिकालेऽपि तत्पूरणार्थत्वात्तद्विध्योः।

एवमुद्देश्यैक्यविवक्षयोद्देश्यभेदेनानियमप्रसक्तौ नियमार्थेष्वव्याप्तिर्दर्शयितव्या। यथा "भार्यामुपेयात्, विदुषे दद्यादि"ति। अनिच्छायां भार्यामुपेयादिति ना नियमः। किन्तु विदुषे मूर्खाय वा दानप्रसक्तौ विदुष इति, भार्यायामन्यस्यां वोपगमप्रसक्तौ "भार्यामुपेयादि"ति नियमः क्रियते। दानोपगमयोर्मूर्ख विद्वद्-भार्या तदन्यप्राप्तिसत्त्वेऽप्युद्देश्ये विदुषि तदन्यस्य नियम्यस्य प्राप्त्यप्राप्ती न स्तः, तस्यैव नियम्यत्वात्।

ननूद्देश्यैक्यमित्यनेन नियम्यप्रतिसम्बन्ध्यैक्यमेव विवक्षितम्। तथा च चतुर्थ्यादिसंयुक्तस्यापि विदुष इह नियम्यतया तत्प्रतिसम्बन्धिन्यामेकस्यामेव दानव्यक्तौ विदुष एव प्राप्त्यप्राप्ती स्तः, इति नाव्याप्तिरिति चेत्। तर्हि प्रकरणपाठादवश्यानुष्ठेयतयाऽप्राप्तिशून्यस्य लिङ्गाविशेषाद्यत्र क्वचिच्छेषिणि प्राप्नुवतो

मन्त्रस्य नियमार्थेषु विधिष्वव्याप्तिः। यथा "सृष्टीरुपदधाती"ति। अत्रोपधाने सृष्टिपदघटितमन्त्रविधिरिति विधिरसायने प्रतिपादितम्। तत्रोपधान इव इष्टका-ग्रहणादिष्वपि कदाचित्प्राप्नुयादिति मन्त्रनियमेऽव्याप्तिः।

न च तत्रोपधानग्रहणादिषु समुच्चित्य प्राप्नुवन्मन्त्रो हि परिसंख्येय इति, नाव्याप्तिरिति वाच्यम्। प्रकरणपाठो हि क्वचिदेव मन्त्रविनियोगे चरितार्थो न प्रत्येकं ग्रहणादौ विनियुंक्ते, लाघवात्। तावतैव स्वचारितार्थ्याच्च।

नन्वेवमुपधानादपि पूर्ववर्तिनि ग्रहणे ततोपि पूर्ववर्तिन्यवेक्षण एव वा प्रकरणान्मन्त्रः प्राप्येत, प्रथमोपस्थितत्वाल्लिंगाविशेषाच्च। न तु तत उदीच्येष्वपि, प्रकरणस्य स्वानुष्ठापकत्वे निर्व्यूढे पुनरननुष्ठापकत्वात्।

अत एव "वसन्ताय कपिञ्जलानालभेते"त्यत्र वहुवचनश्रुतिरपि त्रीन् कपिञ्जलाननुष्ठाप्य कृतार्थम्मन्या न चतुर्थादीननुष्ठापयति। तस्मादुपधानेऽपूर्व-विधिरेव मन्त्रविधिरिति चेत्। तर्हि नापूर्वविधिरपि, प्रकरणेन हि विनियुज्यमानो मन्त्रो यस्य प्रकरणं तत्रैवानुष्ठाप्येतेति न्याय्यम्। प्रधानसम्बन्धलाभात्। नाङ्गेषु, तदलाभात्। एवञ्चायमनुवाद एव स्यात्।

यदि मतं स्वरसत उपधानप्रकाशनैकान्तिकलिङ्गाभावेऽपि विनियुक्तस्य मन्त्रस्य तत्प्रकाशकत्वरूपदृष्टफलकत्वात्, नियमादृष्टावश्यम्भावाच्च नियमविधि-त्वान्नानुवादमात्रत्वमिति, तावता प्रकरणकल्प्यविधिरेव नियमविधिरस्तु। "सृष्टीरुपदधाती"ति त्वनुवाद एव स्यात्।

यद्युच्येत—नायमनुवादः, मध्यमचितिसम्बन्धलाभार्थमिष्टकानां प्रत्ये-कोपधाननियमार्थं चास्य विधेर्विधित्वावश्यम्भावादिति, तथाप्यन्यार्थमपि प्रत्यक्ष-विधिविनियुक्ते मन्त्रे प्रकरणं निराकांक्षत्वाद्विनियोगाक्षममिति स्यात्। विध्यभावे तु प्रकरणान्मन्त्रस्योपधानसम्बन्धः स्यादेवेत्यन्यलभ्यसम्बन्धवोधकत्वात्, तदंशेऽनुवादत्वमेवेति चेत्। तर्हि वस्तुतोऽस्य विधेरसत्त्वेन प्रकरणकल्प्यविध्यभा-वान्नियमासिद्धौ मन्त्रनियमादिष्टोच्छेदभिया मन्त्रनियमफलकत्वमप्यस्यैव विधेर-गत्या कल्पनीयमिति नित्यप्राप्तनियम्यकत्वाद्युक्तैवाव्याप्तिः।

एवं रशनाग्रहणविधिरपि मन्त्रनियमविधिस्स्यात्। नियमासिद्धौ तत्फला-दृष्टासिद्धिप्रसङ्गादिति चेत्। अस्तु तर्हि तत्राप्यव्याप्तिरिति। अथार्थिको नियमः, तस्यादृष्टमपि कल्पनीयमनुष्ठानविशेषाभावात्।

न च तर्हि नियमं कश्चिदतिक्रामेदिति वाच्यम्। अस्य नियमस्य परिसंख्या-नुनिष्पादितया परिसंख्यातार्थानुष्ठाने च प्रत्यवायस्यावश्यकल्प्यतया तद्भीत्यैव गर्दभरशनाग्रहणे कोऽपि मन्त्रं न प्रयुञ्जीतेति नियमातिक्रमप्रसक्त्यभावादिति।

तथापि मन्त्रेण गर्दभरशनां नाद्दत्ताम्। अश्वरशनां उपद्रष्टृवचनादिनाऽऽदाय नियममतिक्रामेदेव। अतस्तत्परिहाराय नियमोऽपि फलवानेव वाच्य इति, तत्राप्यव्याप्तिः।

यद्युच्येत—लक्ष्यत्वमापाद्याव्याप्तिकथनमयुक्तमिति, तर्ह्यन्यत्राव्याप्तिः। तथा हि—प्रकृत्यतिगत्रे विकल्पितस्य षोडशिग्रहस्य नियमः क्रियते "उत्तरेऽहन्द्विरात्रस्य गृह्यते" इति। तत्र तत्साध्यफलविशेषकामं पुरुषं प्रति षोडश्येव प्राप्तः तत्फलनिर्वर्तनेऽग्रहणस्यासमर्थत्वात्। समर्थत्वे षोडशिग्रहवैयर्थ्यस्यैव प्रसंगात्। अतस्तत्रनियम्यस्य षोडशिग्रहस्य प्रतिसम्बन्धिनि क्रतौ तत्प्राप्त्यप्राप्ती न स्तः, इत्यव्याप्तिः।

न च तं प्रति नियमविधिरयमिति वाच्यम्। आपाद्य न दूषणीयमिति, यथासिद्धान्तं दूषणप्रस्तावे त्वया लक्ष्यत्वत्यागायोगात्। पुरुषभेदेन विधिवैरूप्यायोगात्। नियमादृष्टकल्पनावश्यभावेन नियमविधित्वस्यैव स्थितत्वाच्च।

तथोपहव्यादिप्रकरणगते "बृहत्पृष्ठं भवती"त्यादिविधौ चाव्याप्तिः। चित्रत्वादिप्रकारेण स्तुवतो बृहद्रीतिविशेषे प्रीतिविशेषभाजो वा यजमानस्य बृहदप्राप्त्यभावात्। तस्मात्पुरुषान्तरस्य चित्रत्वादिप्रकारकस्तुतौ विशेषप्रीतिरहितस्य नियमप्राप्त्यैवेदृशस्थलेषु नियमविधित्वं वक्तव्यमिति, पुरुषैक्यविवक्षायामप्यव्याप्तिः। एवं काल-कर्म-पुरुषैक्यविवक्षायामव्याप्त्या, तदविवक्षायामतिव्याप्त्या चैतल्लक्षणं दुर्घटमिति स्थितम्।

एवं "सर्वस्त्रिवृद्भवति, सर्वः पंचदशः" इत्यादिविधिष्वतिव्याप्तिः। त्रिवृत्पञ्चदशत्वादेस्तत्रैव क्रतौ बहिष्पवमानाद्यस्तुत्याद्यवच्छेदेन प्राप्तेरन्यावच्छेदेनाप्राप्तेश्च सत्वात्।

न चायं नियमविधिरेवेति वाच्यम्। क्वचिदनुवादमात्रत्वेनांशान्तरेऽत्यंताप्राप्तविषयतया च सर्वकामवाक्यवद्विधित्वात् क्वाप्यंशे नियमादृष्टस्याकल्पनीयत्वात्।

ननु प्राप्तिक्रियाकर्मैकदेशानवच्छेदेन प्राप्त्यप्राप्ती विवक्षिते। अतो न त्रिवृदादिविध्यतिव्याप्तिः। तत्र त्रिवृत्त्वादिकर्तृकप्राप्तिक्रियाकर्मीभवत्क्रतुविशेषैकदेशबहिष्पवमानादिस्तुत्यवच्छेदेन प्राप्तेः, तदन्यावच्छेदेनाप्राप्तेस्तदन्यावच्छेदेनाप्राप्तेश्च सत्वान्नातिव्याप्तिः। अत एव "पृष्ठ्यषडहो बृहद्रथन्तरसामा कार्यं" इति विधावपि नातिव्याप्तिः। तत्रापि तदेकदेशी भवत्प्रथम-द्वितीयाहावच्छेदभेदेनैव प्राप्त्यप्राप्तिसत्त्वादिति चेत्। तर्हि यत्र प्राप्तिकर्मैकदेशावच्छेदेन प्राप्त्यप्राप्ती अपेक्ष्य नियमविधित्वं समर्थनीयम्, तत्राव्याप्तिः। "मन्द्रेणं प्रायणीयायामि"-

त्यादौ। अत्र हि "मन्द्रेण प्रागाज्यभागाभ्याम्, प्रातःसवने च मध्यमेन प्राक् स्विष्टकृतः, माध्यन्दिने च क्रुष्टेन, शेषेण तृतीयसवने च" इत्यैष्टिकस्वरप्राप्त्याऽऽज्यभागपूर्वंवर्त्यंगावच्छेदेन प्राप्तिं तदितराङ्गावच्छेदेन मन्द्रत्वस्याप्राप्तिं च सम्भाव्यैव नियमविधित्वं वक्तव्यम्। तन्न स्यादवच्छेदभेदं विनेति विवक्षायामिति।

नन्वयं क्वचिदनुवादत्वात्क्वचिदप्राप्तविषयत्वाच्च सर्वकामवाक्यवदलक्ष्यमस्त्विति चेत्। न। ऐष्टिकस्वरविधेरप्रवृत्त्या नियमं सम्भाव्य, वैकृतोदुम्बरादिविधिवत् दृष्टार्थत्वान्नियमादृष्टावश्यंभावाच्च नियमविधित्वेनैव स्वीकार्यत्वात्। सार्वकाम्यविधौ तु सर्वथा दृष्टार्थत्व-नियमादृष्टयोरभावादपूर्वविधित्वमेवेति विशेषः। तस्मादवच्छेदभेदविवक्षा-तदभावयोरपि दर्शितो दोषः।

तथा लक्षणीयविधिमात्राप्रवृत्तौ नियम्य प्राप्त्यप्राप्ती अपेक्ष्य लक्षणं समर्थनीयम्, विध्यन्तराप्रवृत्तिसहितैतद्विध्यप्रवृत्तौ वा, नियम्यतत्प्रतिसम्बन्धिसम्बन्धबोधकत्वाभिमतोपदेशत्वावच्छिन्नोपदेशाप्रवृत्तौ वा? न तावदाद्यः पक्षः। "व्रीहिभिर्यजेत, यवैर्वा यजेत" इत्यादावव्याप्तेः। व्रीहिशास्त्राभावे यवशास्त्रेण यवानामेव नियतप्राप्त्या व्रीहीणां प्राप्त्यप्राप्त्योरभावात्। एवं यवेष्वप्यूह्यम्। एवं वैकृतोदुम्बरतादिविधिष्वपि द्रष्टव्यम्।

नापि द्वितीयः पक्षः—प्रकृतितो विकल्पेन प्राप्तयोर्बृहद्रथन्तरयोर्ग्रहणाग्रहणयोर्वा नियमार्थयोरुपहव्य-द्विरात्रादिगतयोः "बृहत्पृष्ठं भवति, उत्तरेऽहन्द्विरात्रस्य गृह्यत" इत्यनयोः स्वविधिमात्राप्रवृत्त्या नियमपक्षप्राप्तिं सम्भाव्य, लक्षणसमर्थनेऽपि "सर्वस्मै वा एतद्यज्ञाय गृह्यते, यत् ध्रुवायामाज्यमि"ति परिसंख्यायामतिव्याप्तिः। 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्, यदुपभृति, प्रयाजानुयाजेभ्यः" इति विधिभ्यां सह प्रकृतविध्यप्रवृत्तावाज्यभागादिषु ध्रौवाज्यस्य पक्षप्राप्तिसम्भवात्कथं पक्षप्राप्तिरिति चेत्। इत्थम्। "चतुर्जुह्वां गृह्णाति, अष्टावुपभृति, चतुर्ध्रुवायामि"ति त्रीण्याज्यानि कार्यविशेषासम्युक्तानि दर्श-पूर्णमासयोरुत्पन्नानि। तत्र च प्रयाजानुयाजाज्यभागादिकर्माणि च द्रव्यापेक्षाणि। तत्र "यज्जुह्वां गृह्णाति, प्रयाजेभ्यस्तत्, यदुपभृति, प्रयाजानुयाजेभ्यस्तदि"ति विधिभ्यां जौहवौपभृताज्ययोः प्रयाजानुयाजरूपाज्यापेक्षकर्मविशेषसंयोजने सति परिशेषादाज्यभागादिषु यज्ञरूपेषु, सदनकरणादिष्वयज्ञरूपेषु च ध्रौवाज्यस्य समुच्चित्य नित्यप्राप्तावपि, प्रकृते जौहवौपभृताज्यविनियोजकविध्योरप्यप्रवृत्तितर्कणदशायामाज्यभागादिषु विनिगमनाविरहाज्जौहवादीनां त्रयाणामप्येषामाज्यानां नियमेन प्राप्तिरस्तीति, तत्रातिव्याप्तिः।

एवं गवामयने "पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्य" इत्यपूर्वविधिः। तदन्तर्गतेषु तृतीयादिष्वहःसु तत्प्रकृतिभूताद्द्वादशाहिकात् नानापृष्ठ्यषडहात्क-

मेण वैरूप-वैराज-शाक्वर-रैवतपृष्ठानामेव प्राप्तत्वेन "तृतीये रथन्तरम्, चतुर्थे बृहत्, पंचमे रथन्तरम्, षष्ठे बृहदि"त्यस्यार्थस्य कथञ्चिदपि प्राप्त्यभावात्तत्राति-व्याप्तिः। प्रकृतविधेर्द्वादशाहिकनानापृष्ठविधेश्चाभावे चोदकपरम्परया बृहद्र-थन्तरयोरनियमेन प्राप्तिसम्भवात्।

नापि तृतीयः पक्षः—तत्रापि प्रकृतनियम्यसम्बन्धस्य साक्षाद्बोधकोपदेशाप्रवृत्तौ चिन्तनीयायां पूर्वोक्तेषु "व्रीहिभिर्यजेत, यवैर्वायजेत, औदुम्बरो यूपो भवती"त्यादिप्राकृत-वैकृतद्रव्यनियमविधिष्वव्याप्तिः। तेषु विध्यन्तराप्रवृत्तिम-प्यपेक्ष्य, पक्षप्राप्तविषयतया समर्थनीयेषु साक्षाद्बोधकतत्तद्विधिमात्राप्रवृत्ताव-त्यन्ताप्राप्तविषयत्वेन पक्षप्राप्ताविषयत्वात्।

साक्षात्परम्परौदासीन्येन प्रकृतनियम्यप्रतिसम्बन्धिसम्बन्धबोधकोप-देशमात्राप्रवृत्तावुच्यमानायां बहुष्वव्याप्तिः। "व्रीहिभिर्यजेत व्रीहीनवहन्ती"त्यादिषु सर्वेष्वेव स्वस्वप्रधानकर्मविधीनामत एव तत्प्रकरणादीनामप्यप्रवृत्तौ तर्कणीयतया प्रसक्तायां दर्शपूर्णमासादेरेवाभावेन स्वस्वप्रतिसम्बन्धिषु नियम्यानां व्रीहि-तदवघातादीनामत्यन्ताप्राप्तत्वेनाव्याप्तिः, सम्भव एव वा स्यात्। सर्वत्र चैषु पक्षेषु "सोमेन यजेत, यदाग्नेयोऽष्टाकपालोऽमावास्यायामि"त्यादिषु द्रव्यविशिष्टकर्मोत्पत्तिविधिषु द्रव्यांशे नियमविधित्वेन समर्थनीयेषु स्वमात्राप्रवृत्तावपि नियम्य-प्रतिसम्बन्धिनोरुभयोरप्यभावादत्यन्ताप्राप्तविषयतया नियम्यस्य प्राप्त्यप्राप्ती न विद्येते इति तेष्वव्याप्तिर्दर्शयितव्या।

एतेन सकलवैदिकमानाप्रवृत्तौ चिन्त्यमानायामित्यादिविवक्षान्तरमप्य-पास्तम्, असम्भवप्रसंगात्। एवं चैतादृशविध्यप्रवृत्तिव्यापिका पाक्षिकतेति निर्वचनाशक्यापि लक्षणं दुष्टमिति स्थितम्।

एवं यस्य पक्षप्राप्तिः—तद्विषयविधित्वं नियमविधित्वं वा, तदप्राप्तांशपरि-पूरणफलकत्वं नियमविधित्वं वा ? आद्ये-अतिव्याप्तिः, "नानृतं वदेत्, न कलञ्जं भक्षयेदि"त्यादिपरिसंख्यायाम्। अत्रैतद्विध्यभावे पुमिच्छावैचित्र्येण-अनृतवदननिषेधादेः पक्षप्राप्तत्वात्। द्वितीये परिसंख्याफलकत्वेन पूरणफल-कत्वाभावादव्याप्तिनिरासेऽपि "औदुम्बरो यूपो भवती"त्यादिविधिष्वव्याप्तिः। "यदभावे यन्न स्यात्, तद्व तस्य फलमि"ति न्यायेन औदुम्बरविध्यभावे प्राकृतखदिरत्वादेरेव प्राप्त्यात्यन्ताप्राप्तौदुम्बरप्राप्तिमात्रफलकत्वेन तत्पूरणफल-कत्वाभावात्। 'हिरण्यगर्भस्समवर्तताग्रे' इत्याघारमाघारयति, इषे त्वेत्याच्छिनत्ति, उत्करे वाजिनमासादयति, परिधौ पशुं नियुंजीतेतीत्यादिषु विधिप्रवृत्त्यन्तर-कल्प्यप्रतिसम्बन्धिकेष्वव्याप्तिः स्फुटैव।

न चैषामलक्ष्यत्वमिति वाच्यम्। विनियोगानन्तरं क्लृप्तसामर्थ्येषु तेषु नियमादृष्टस्यावश्यकल्प्यत्वात्। अन्यथा दृष्टार्थानां तत् न प्राप्नुवत्या दक्षिणाया ऋत्विग्भिः समवायाभावात्।

यदि शेषत्वेन "वैश्यो वैश्यस्तोमेन यजेत" इत्यादावव्याप्तिः, तत्र कर्म पुरुषार्थम्, तच्छेषितया तत्फलकामस्य यस्य कस्यापि प्राप्तौ वैश्यनियमनात्।

एवं "यद्योन्यां गायति, तदुत्तरयोर्गायती"त्यत्राव्याप्तिः। तत्र वामदेव्यादिसाम्नां संस्कार्यतया शेषिभूतयोस्तदाधारकयोर्ऋचोर्नियमनात् "यदि शेषित्वेन, तदा साम्ना स्तुवीते"त्यत्राव्याप्तिः। स्तोत्राङ्गभूतास्वृक्षु शेषत्वेनैव साम्नश्चातुस्वर्यादेर्वा प्राप्तौ सामनियमनात्। "यद्याधारत्वेन, तदा अयस्पात्रेणापि दधाती"त्यत्राव्याप्तिः। अपिधानद्रव्यस्याधेयत्वेनैव प्राप्तेः। "यद्यावेयत्वेन, तदा वेद्यां हवींष्यासादयती"त्यत्राव्याप्तिः। आधारत्वेनैव वेदिनियमात्।

यदि येन केनापि सम्बन्धेन, तदा सार्वकाम्यविध्यतिव्याप्तिः। तत्र द्रव्यत्व-ऋत्विक्त्वादिना पक्षप्राप्तानामेव पशु-पुत्रादीनां फलानां प्राप्तांशपूरणात्।

येन सम्बन्धेन पक्षप्राप्तिः, तेनैव सम्बन्धेनाप्राप्तांशपरिपूरणफलकत्वं विवक्ष्यते। पश्वादयश्च द्रव्यत्वेन पक्षप्राप्ता अपि फलत्वेन न पक्षप्राप्ताः, फलत्वेन चात्राप्राप्तांशपूरणं क्रियत इति, न तत्रातिव्याप्तिरिति चेत्। न। यागद्रव्यं पशुर्मे भूयात्, ऋत्विक्पुत्रो मे भूयादि"त्यादिकामनास्थले तेनैव सम्बन्धेन पक्षप्राप्तस्य तेनैव सम्बन्धेन फलतयाऽप्राप्तांशपूरणात्पक्षप्राप्तिरहितोदुम्बरता हिरण्यगर्भमन्त्रादिस्थले सर्वथैवाव्याप्तेश्च सम्बन्धविचारमुखेनाप्ययुक्तमिदं लक्षणम्।

अत्र च "व्रीहिभिर्यजेते"ति विधिर्नियमविधिरिति मत्वा, तत्राव्याप्तिरुद्भाविता। तत्र यद्यपि जात्यवस्थादिविशेषनियमनस्य नवमश्लोकावतारिकायां "व्रीहीन्निर्वपती"त्यादिसंस्कारविधिसहकृतश्रपणविधिलभ्यस्याफलत्वान्न व्रीहिनियमार्थत्वं व्रीहिशास्त्रस्येत्युपपादितत्वात्तत्पुरस्कारेणाव्याप्तिकथनमयुक्तम्। तथापि प्राचीनसिद्धान्तानुसारप्रवृत्तत्वात्पालाश-खादिरादियूपनियमविधीनां तत्स्थाने निवेशनसम्भवाच्च न दोषः।

तथा तस्य शास्त्रस्य यवेष्ववघातनियमार्थत्वमङ्गीकृतं दीक्षितेन्द्रैः। व्रीहिशास्त्रेणापूर्वीयत्वेऽवगते संस्कारविधिगतव्रीहिशब्दैर्लक्ष्यमाणे वृत्तिद्वयविरोधपरिहाराय व्रीहित्वं त्यक्त्वा स्रुवादिव्यावृत्त्यै तण्डुलप्रणाडिकत्वेन विशेषणीयमपूर्वीयत्वम्। तच्च यवसाधारणमिति यवेष्ववहन्तिशास्त्रावगतावघात-

नियमफलकत्वाद्व्रीहिशास्त्रस्येति। तन्नव्याः न क्षमन्ते। एतद्विध्यभावेऽपि संस्कारवाक्येषु साध्यतयाऽवगतानां व्रीहीणां स्वरूपेण साध्यत्वे संस्कारानर्थक्यादित्यपूर्वीयत्वेनैव साध्यत्वं कल्प्यम्, तच्च स्रुवादिव्यावृत्त्यर्थं विशेष्यमाणं तण्डुलप्रणाडिकत्वेन वा विशेष्यताम्, व्रीहिगतत्वेनैव वा विशेषणीयमित्यत्र कारणाभावात्, कल्पनायां वृत्तिद्वयविरोधाभावस्य तुल्यत्वात्, उपस्थितत्वस्यापि तुल्यत्वात्। व्रीहिगतत्वस्य व्रीहिशब्देनेव तण्डुलप्रणाडिकत्वस्यापि प्रकरणालोचनयापूर्वीयत्वावगतिसमकालमेवावगतत्वात्। तथा चापूर्वीयलक्षणाभावेऽपि सिध्यतोऽवघातनियमस्य न व्रीहिशास्त्रफलत्वम्। ततश्च न तस्य नियमविधित्वमिति।

अत्र दीक्षितेन्द्रैः सिद्धान्तभङ्गमङ्गीकृत्य तत्राव्याप्त्यादिकमुक्तम्। न वस्तुतः। अपूर्वीयलक्षणाया अग्रे तैरेव खण्डनात्। तन्मूलकनियमविधित्वाभावस्य तदिष्टत्वात्। न तेष्वयं दोषः। सिद्धान्तिना सतापूर्वीयलक्षणां हित्वा, यत्रसाधारणसमर्थनं स्वव्याघातकमिति द्रष्टव्यम्।

अशक्यं च संस्कारवाक्यपदजन्यपदार्थोपस्थितिदशायामेवोपस्थिते व्रीहित्वे लघुशरीरे च सति तदतिक्रम्य, संस्कारवाक्यजन्यापातवाक्यार्थोपस्थित्यनन्तरकालीनानर्थक्यादिप्रतिसन्धानानन्तरकालकल्प्यानेकप्राकरणिकवाक्यार्थनिष्कर्षानन्तरकालप्रत्येतव्यापूर्वीयत्वेन समकालप्रतिपन्नस्यापि तण्डुलप्रणाडीकत्वस्य गुरुशरीरस्य चापूर्वीयत्वविशेषणत्वायोगात्।

यदपि-वस्तुतस्तु स्रुवादिष्वतिप्रसङ्गशङ्कैव नास्ति। तथा हि—प्रधानविधिरेवाङ्गानुष्ठापकः। स च स्वापेक्षितदृष्टप्रयोजनानुसारेण व्रीहि-यवेष्ववघातानुष्ठानमापादयति, न स्रुवादिषु। अत एव "प्रयाजशेषेण हवींष्यभिघारयती"ति श्रुतविनियोगभङ्गेन "प्रयाजशेषं हविःषु क्षारयेदि"ति वचनव्यक्तिमङ्गीकृत्य, प्रयाजशेषप्रतिपत्त्यर्थमभिघारणम्, न हविस्संस्कारार्थम्, तथा सत्यदृष्टार्थत्वापत्तेरिति चतुर्थे व्युत्पादितमिति। तस्माद्यवेष्ववघातनियमार्थत्वं व्रीहिशास्त्रस्यासम्भावितमेवेति।

तदप्ययुक्तमेव स्वव्याघातस्य दीक्षितेन्द्रतात्पर्याविरोधस्य च दर्शितत्वात्। एवमपि सिद्धान्तापेक्षितस्यादृष्टार्थप्रोक्षणादेर्यवसाधारण्यस्यासिद्धेश्च। तत्र च लक्षणाश्रयणे किमपराद्धम्? दृष्टार्थसंस्कारविधिगतव्रीह्यादिपदलक्षणया। न च प्रधानविधिरेव यवेषु प्रोक्षणमप्यनुष्ठापयतीति शक्यशङ्कम्, स्वापेक्षितदृष्टप्रयोजनलाभस्यासम्भवातित्वाद्यवेषु क्रियमाणस्य प्रोक्षणस्यादृष्टार्थत्वानपायात्।

किञ्च प्रधानविधिरपि यथा यथावगतानि स्वाङ्गानि, तानि तथा तथा-अनुष्ठापयति। तत्र यद्यवधातो व्रीहिस्वरूपसंयुक्त एवावगतः, तं तथैवानुष्ठापयेत्। न त्वन्यत्र नीयमानोऽप्ययं दृष्टार्थ एव स्यादिति मत्वा यवेष्वपि तदनुष्ठापयेत्। यद्यनुष्ठापयेत्तदा स्फ्यादियज्ञायुधानां मध्ये येन यद् दृष्टप्रयोजनं कर्तुं शक्यम्, तदपि तेनानुष्ठापयेत्। तथा चापृथक्कृतेन तण्डुलाज्यादिनान्वाहार्यपाकाद्य-संभवात्तत्रत्यापेक्षितनिर्वापो निर्वापसाधनत्वेनान्यत्र श्रुतामग्निहोत्रहवणीमेव यवेष्वपेक्षितवैतुष्यार्थमन्यत्र तत्साधनत्वेनावगतमवघातमिवानुष्ठापयेत्। तस्मात्संस्कारशास्त्रस्यैव यवसाधारण्येन प्रवृत्तिर्वाच्या। तच्च लक्षणामन्तरेण न सम्भवति। सा च व्रीहिशास्त्रापेक्षेति, तेन यवेषु प्रोक्षणप्राप्तिरिवावघात-नियमोऽपि परम्परया प्राप्यत एवेति, लक्षणाङ्गीकारसिद्धान्ते व्रीहिशास्त्रं यवेष्व-वघातनियमार्थमेव। तस्मात्तत्राव्याप्तिकथनमपि समञ्जसमेव। एवं च प्राप्ति-समानाधिकरणाप्राप्तिपदेन विवक्षिता। तादृशस्याप्राप्तांशपूरणफलकत्वं लक्षण-मित्ययुक्तमिति स्थितम्।

एतेनैव वक्ष्यमाणपक्षा अपि निरस्ताः। वैशेषिकदूषणाभिधानाय कृतान-नुक्रमिष्यामः। तथाहि—विरोध्याक्रमणप्रयुक्तं प्राप्तत्वं विक्षितम्। सर्वफला-प्राप्तेर्विरोध्याक्रमणप्रयुक्तत्वं नास्ति। तद्विध्यप्रवृत्तिदशायां प्रापकप्रमाणसत्त्वा-न्नियमविध्युदाहरणेष्ववहननादिप्रापकलौकिकप्रमाणसत्त्वेऽपि तदप्राप्तेस्तन्न्याया-पवादकस्वर्गकामविधिप्रापितस्वर्गरूपविरोध्याक्रमणप्रयुक्तत्वात्।

न चैवमपि पूर्वोक्तातिव्याप्त्यनिस्तारः। विश्वजिदधिकरणपूर्वपक्षन्याया-प्रवृत्तिदशायामपि प्रापकस्य सत्त्वेन तदप्राप्तेस्तन्न्यायापवादकस्वर्गकामविधि-प्रापितस्वर्गरूपविरोध्याक्रमणप्रयुक्तत्वादिति वाच्यम्। प्रकृतविध्यभावदशायां प्रकृतविध्यर्थप्रापकत्वेन सम्भवत्प्रवृत्तिकप्रमाणविरोध्याक्रमणप्रयुक्तत्वमप्राप्तेर्वि-वक्षितम्। प्रकृते च सर्वकामविध्यप्रवृत्तिदशायां विश्वजिदधिकरणपूर्वपक्षन्यायः सम्भवत्प्रवृत्तिको न भवति। प्रातिस्विकप्रत्यक्षवचनेन स्वर्गस्यैव प्राप्त्या फला-कांक्षायाः शान्तत्वात्। तथा च प्रातिस्विकविधिप्रापितस्वर्गस्य विरोधिमात्रे सत्यपि सम्भवत्प्रवृत्तिकप्रमाणविरोधित्वाभावेन तादृशविरोध्याक्रमणप्रयुक्तत्वा-भावादप्राप्तेर्नातिव्याप्तिरिति वदन्ति।

अत्र ब्रूमः। एवं हि 'नानृतं वदेत्, न कलञ्जं भक्षयेत्, नागम्यां गच्छे-दि''त्यादिपरिसंख्यास्वतिव्याप्तिः। एतद्विध्यप्रवृत्तिदशायां सम्भवत्प्रवृत्तिकं यत्प्रमाणं "अनृतं न ब्रूयामि"ति विचित्रेच्छाघटितं प्रमाणम्। तद्विरोध्यनृत-वदनाक्रमणप्रयुक्ताप्राप्ति-तदनृतवदनाभावाप्राप्तांशपूरणफलकत्वात्। एवं "अश्वः

श्यावो दक्षिणे"त्युपहव्ये दक्षिणां विधाय, श्राविते "स ब्रह्मणे देयः" इति विधौ "औदुम्बरः सोमचमसो दक्षिणे"ति ऋतपेयदक्षिणां विधाय "श्राविते सप्रियाय सगोत्राय ब्रह्मणे देयः" इति विधाय, आयुष्कामेष्टिप्रकरणे हविश्शेषं प्रकृत्य "श्रुते सर्वं ब्रह्मणे परिहरति" इति विधौ चातिव्याप्तिस्स्यात्। एषामेतद्विध्यप्रवृत्तावेतद्विध्यर्थब्रह्मसम्बन्धप्रापकत्वेन सम्भवत्प्रवृत्तिकचोदकरूपप्रमाणविरोधिऋत्विगन्तरसम्बन्धाक्रमणप्रयुक्ताप्राप्तिमद्ब्रह्मसम्बन्धाप्राप्तांशपरिपूरणार्थत्वात्।

नन्वेतद्विध्यर्थो न केवलं ब्रह्मसम्बन्धमात्रम्। किन्तु सर्वांशव्यापि ब्रह्मसम्बन्धः। तत्प्रापकत्वेन चोदकरूपप्रमाणं च सम्भवत्प्रवृत्तिकम्। एवमनृतवर्जनप्रमाणमपि न सार्वकालिकानृतवर्जनप्रापकं सम्भवतीति प्रमाणविरोध्याक्रमणप्रयुक्ताप्राप्तिमात्रसत्त्वेऽपि प्रकृतविध्यर्थप्रापकत्वेन सम्भवत्प्रवृत्तिकत्वरूपप्रमाणविशेषणाभावप्रयुक्तविशिष्टाभावसत्त्वान्नातिव्याप्तिरिति चेत्। तर्हि हन्त्यादिनियमाव्याप्तिस्स्यात्। तत्रापि व्रीहिष्ववघातमात्रं न विध्यर्थः। किन्तु सर्वांशव्याप्यवघातसम्बन्ध इति, लौकिकप्रमाणस्यापि तादृशत्वाभावात्। भावे वा ततः एव नियमसिद्धौ हन्त्यादेरनुवादमात्रत्वापत्तेः। यूपौदुम्बरतानियमेष्वव्याप्तिकथनं पिष्टपेपणमित्यास्तां तावत्।

यदपि यद्वाऽप्राप्तिसम्भवत्प्राप्तिकविरोध्याक्रमणप्रयुक्तत्वं विवक्षितम्। अस्ति च व्रीह्यादिष्ववहननाप्राप्तिसंभवप्राप्तिकरम्भितप्राप्तिकविदलनादिरूपविरोध्याक्रमणप्रयुक्तत्वम्। एवं च न सार्वकाम्यविधावतिव्याप्तिः। तदभावे स्वर्गान्यफलाप्राप्तेः स्वर्गकामवाक्यकृतनियतप्राप्तिकस्वर्गरूपविरोध्याक्रमणप्रयुक्तत्वात्।

न चैवं सति "पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्यः" इति षडहोद्देशेन बृहद्रथन्तरपृष्ठविधावतिव्याप्तिस्स्यात्। षडहांशेषु तृतीयादिष्वहस्सु बृहद्रथन्तराप्राप्तेरप्राप्तिकरम्भितप्राप्तिकवैरूप-वैराजादिरूपविरोध्याक्रमणप्रयुक्तत्वादिति वाच्यम् बृहद्रथन्तरविध्यभावे सति तृतीयादिष्वहस्सु वैरूप-वैराज-शाक्वर-रैवतानां यथाक्रमं चोदकान्नियतप्राप्तिसम्भवेनाप्राप्तिकरम्भितप्राप्तिकत्वाभावात्।

न च चतुर्थेऽहनि वैरूपस्य, तृतीयेऽहनि वैराजस्याप्राप्तिः। एवं शाक्वररैवतयोरपीत्यप्राप्तिकरम्भितप्राप्तिरस्तीति वाच्यम्। एकस्मिन्नुद्देश्येऽप्राप्तिकरम्भितत्वमप्राप्तेर्विवक्षितम्। प्रकृते च वैरूपस्य यस्मिन्नुद्देश्ये तृतीयेऽहनि प्राप्तिः, तत्राप्राप्तेः कदाप्यभावेन, नाप्राप्तिकरम्भितत्वं प्राप्तेः सम्भवति,। एवं वैराजादावपीति नातिव्याप्तिः, न वाऽसम्भवः। व्रीहिरूप उद्देश्येऽवघातप्राप्तेरप्राप्तिकरम्भितत्वसम्भवात्-इति।

इदमप्ययुक्तम्। अप्राप्तविषयवैकृतोदुम्बरता—हिरण्यगर्भमन्त्रादिनियमविध्यव्यापनादिति स्पष्टमेव।

तथा गावामयनिके "पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्यः" इत्यत्राप्यतिव्याप्तिरेव। उक्तविधयाऽहर्विशेषेषु वैरूपादीनामप्राप्तिकरम्बितप्राप्तिकत्वाभावेऽपि नियम्यमानबृहद्रथन्तरोद्देश्यषडहेऽवच्छेदकभेदेनाप्राप्तिकरम्बितप्राप्तिमत्त्वात्।

ननु नियम्यप्रतिद्वन्द्विनो यस्माद्व्यावर्तन्ते, तस्मिन्नुद्देश्ये तेषामप्राप्तिकरम्बितप्राप्तिमत्त्वं विवक्षितम्। तादृशं चोद्देश्यं तृतीयाद्यहरेवेति, तत्र वैरूपादेर्नाप्राप्तिकरम्बितप्राप्तिमत्त्वमिति चेत्। किमतः ? तादृशोद्देश्यः षडहोऽपि भवतीति, तमादायातिव्याप्तितादवस्थ्यात्। न च यस्माद्यस्मादुद्देश्यात्प्रतिद्वन्द्वी व्यावर्त्यते, तत्र सर्वत्र प्रतिद्वन्द्विनामप्राप्तिकरम्बितप्राप्तिर्विवक्षिता। तथा च नोक्तातिव्याप्तिः। नियम्यप्रतिद्वन्द्वव्यावृत्त्यधिकरणत्वावच्छिन्ने तृतीयादावहनि वैरूपादेरप्राप्तिकरम्बितप्राप्त्यभावादिति वाच्यम्। "साम्ना स्तुवीते"त्यादावव्याप्त्यापत्तेः। तत्र हि साम्ना स्तोत्राङ्गभूतेन स्तोत्रऋगक्षराभिव्यक्त्यर्थं लोकादनियतप्राप्ताश्चातुस्वर्याद्युपायास्स्तोत्रात्तदुपायभूतऋगक्षरेभ्यश्च व्यावर्त्यन्ते। न चातुस्वर्यस्य स्तोत्रे तदंगऋगक्षरेषु चाप्राप्तिकरम्बिताप्राप्तिस्सम्भवति, स्तोत्रे प्राप्तेरेवाभावात्। ऋगक्षरेषु च प्रातिशाख्य–व्याकरणादिना नियतानामेवोदात्तानुदात्तादीनां प्राप्तेश्चेति दिक्।

यदप्यनिर्धारितत्वमप्राप्तांशविशेषणं क्रियते। तथा च सार्वकाम्यविधौ स्वर्गांशः प्राप्तः, तदन्यफलांशस्त्वप्राप्त इति निर्धारणसंभवान्नातिव्याप्तिः। नाप्यसम्भवः, व्रीह्यादिष्ववहननाद्यप्राप्तांशस्य इदन्तया निर्धारणाभावात्।

न च "अश्वश्श्यावो दक्षिणा, स ब्रह्मणे देयः"इत्यत्रातिव्याप्तिः। सर्वर्त्विक्साधारणे तस्मिन्नयमंशो ब्रह्मणः, अयमन्येषामिति निर्धारणासम्भवादिति वाच्यम्। अर्धि-पादिव्यवस्थानुसारेण तत्तद्दक्षिणांशानां तत्तद्ब्रह्मादिऋत्विक्सम्बन्धित्वेन निर्धारणसम्भवान्नातिव्याप्तिः।

न च "उत्करे वाजिनमासादयती"त्यादिनियमविधिष्वव्याप्तिः। एतद्विध्यभावे उत्करादेरप्राप्तत्वेन निर्धारणसम्भवादिति वाच्यम। एवंजातीयकविधीनां नियमविधित्वानङ्गीकारे वाधकाभावादिति।

तदपि तुच्छम्। एवमपि श्यावाश्वेन सहैवोद्भाविते "सर्वं ब्रह्मणे परिहरती"ति विधावतिव्याप्तिपरिहारस्य लेशतोऽप्यवर्णनात्।

न च श्यावाश्वतुल्यन्यायत्वादुपेक्षितमिति वाच्यम्। हविश्शेषस्य ग्रीवा-कर्ण-पाद-पुच्छाद्यभावेनाश्वसाम्यस्य दुर्वचत्वात्। दक्षिणात्वाभावे अर्धिपादिव्यवस्थया तत्तदंशे निर्णयासम्भवात्। इष्टिऋत्विजां कल्प्यदक्षिणा-

कत्वेनार्धि-पादिव्यवस्थाया अनुपपत्तेश्च। श्यावाश्वेऽपि अर्धि-पादिनां प्रत्येक-मनेकत्वेन "अयं ब्रह्मणोंऽशः, अयं होतुरंशः, अयमध्वर्योरंश" इत्यादिप्रकारेण निर्धारणासम्भवेन "स ब्रह्मणे देयः" इत्यत्रातिव्याप्तेस्तादवस्थ्याच्च। तथापि "ग्रीवा होतुः, पादावध्वर्योरि"तिवदनिर्धारणतादवस्थ्याच्च।

ननु परिमाणतो निर्धारणादपि विवक्षितं निर्धारितत्वं नास्तीति चेत्। तर्हि हन्त्यादिविध्यव्याप्तिः। तत्रापि "विदलनमधिककालसाध्यम्, अवहननमल्पका-लसाध्यमि"त्यादिना निर्धारणसम्भवात्।

यत्तु "उत्करे वाजिनमासादयती"त्यादेरलक्ष्यत्वमेवेति। तद-युक्तम्। वह्वाकरव्यवहारविरोधाद्दृष्टार्थत्वान्नियमादृष्टावश्यंभावात्स्वयं लक्षणाकरणासामर्थ्येन तस्य लक्ष्यवहिर्भावकल्पनस्यायुक्तत्वाच्च। अन्यथा— ककारवत्त्वमपूर्वविधित्वम्, जकारवत्त्वं नियमविधित्वम्, दकारवत्त्वं परिसंख्याविधित्वमिति लक्षणानि निर्माय, तादृशमेव लक्ष्यतावच्छेदकं च स्वीकृत्य, कृती स्यात्। तस्मात्प्राचीनव्यवहारानुसारेण लक्षणं कर्तव्यम्। तथा च नियमविधित्वलक्षणमप्यव्याप्त्यतिव्याप्तिग्रस्तत्वाद-युक्तमेवेति सिद्धम्।

इति श्रीमद्बल्लुबोम्मकुलार्णवपूर्णचन्द्र-चिन्नमाम्बागर्भशुक्तिमुक्ताफल-ब्रह्मण्यबिरुदाङ्कित-चोक्कनाथभूपालप्रियसचिव-चिन्नबोम्मभूपालहृदयकुहरविहरमाणसांबशिवप्रेरितेन चिन्नाप्पय्यदीक्षितेन विरचितायां दुरूहशिक्षायां नियमविधिलक्षणा-क्षेपपरिहारभङ्गो नाम षष्ठस्तरङ्गः।



## अथ परिसंख्याविधिलक्षणाक्षेपपरिहारभङ्गो नाम सप्तमस्तरङ्गः ।

अथ "तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते" इति परिसंख्याविधिलक्षणमाचार्यैरुक्तम् । तद्यपि विधिरसायने बहुधा दूषितम्, तथापि तस्य

### विधिदर्पणोक्तलक्षणस्यानुवादः

तात्पर्यगत्या सम्भावितं लक्षणान्तरं वदन्ति— प्रकृतोद्देश्यसम्बन्धित्वेन प्रकृतधात्वर्थप्रतियोगिकत्वेन प्रकृतविध्यविधेया प्रकृतधात्वर्थानुष्ठानभिन्ना या इतरनिवृत्तिः, तत्फलको विधिः परिसंख्याविधिरिति । अस्ति चेदं लक्ष्ये "इत्यश्वाभिधानीमादत्ते" इत्यत्र, प्रकृतोद्देश्यमश्वाभिधान्यादानम् । तस्मिन्मन्त्रो विधीयते । तथापि तस्य मन्त्रस्य गर्दभरशनातो निवृत्तिः फलति, प्रत्यक्षविधिविनियोगेन मन्त्राकांक्षाशान्त्या रशनाद्वयसाधारण्येन विनियोक्तुं प्रसक्तस्य लिङ्गस्य निवारणादिति वस्तुस्थितिः ।

तथा च विधिफलीभूता इतरनिवृत्तिः प्रकृतविधिविधेयैव न भवति । कुतः ? प्रकृतोद्देश्ये प्रकृतधात्वर्थप्रतियोगिकत्वेन च तद्विधेया स्यात् । तथा च विशेषणयोर्विशेष्यस्य चाप्यभावाद्विशिष्टाभावसत्त्वात्प्रकृतधात्वर्थीभूतादानभिन्नत्वाच्च निवृत्तेः । "अत्र ह्येवावपन्ती"त्यत्र पवमानगतगायत्र्यादिभ्योऽन्यत्रावापपरिसंख्यायां यद्यप्यावापनिवृत्तिः प्रकृतविधिविधेया । तथापि प्रकृतोद्देश्ये गायत्र्यादौ न विधीयत इति, तत्रापि लक्षणसमन्वयः ।

"पञ्च पञ्चनखा भक्ष्याः" इति वानरादिभक्षणपरिसंख्यायामितरनिवृत्तेः प्रकृतविध्युद्देश्ये पुरुष एव विधेयत्वेऽपि न प्रकृतधात्वर्थप्रतियोगिकत्वेन विधेयत्वम्, प्रकृतधात्वर्थस्य कूर्मादिभक्षणात्मकतया वानरादिभक्षणप्रतियोगिकनिवृत्ते तत्प्रतियोगिकत्वायोगादिति विशिष्टाभावसत्त्वात्, प्रकृतधात्वर्थानुष्ठानभिन्नत्वाच्च नाव्याप्तिः ।

नाप्यग्निहोत्रं जुहोती"त्यादावतिव्याप्तिः । तत्राग्निहोत्राकरणनिवृत्तेर्विधिफलीभूतायाः प्रकृतोद्देश्ये पुरुष एव होमत्वेन विधीयमानाया अपि प्रकृतधात्व-

र्थप्रतियोगिकत्वेनाविधीयमानत्वादस्ति विशिष्टाभावो निवृत्तौ, तथापि प्रकृतधात्व-र्थानुष्ठानरूपायास्तस्यास्तद्भिन्नत्वाभावात्।

"न हिंस्यात्सर्वा भूतानी"त्यादावप्राप्तांशपूर्तिफलकतया नियमविधौ नातिव्याप्तिः। तत्रेतरनिवृत्तेः प्रकृतविधिविधेयत्वात्। एवं "नातिरात्रे षोडशिनमि"त्यादावपि द्रष्टव्यम्—इति।

## तन्निरासः

अत्र न ताव "दिमामगृभ्णन्नि"त्यत्र लक्षणमस्ति। तत्रापीतरनिवृत्तेरेव विधेयत्वात्। अन्यथा प्रत्यक्षविधानान्मन्त्रस्य स्वाकाङ्क्षया गर्दभरशनायां विनियोगाभावेऽपि तदाकाङ्क्षयाऽऽग्नीध्रोपस्थानाकांक्षयाऽऽग्नेय्या इव विकृत्याकाङ्क्षया प्राकृतधर्मजातस्येव शान्ताकांक्षत्वेऽप्याकांक्षामुपजनय्यान्वयस्य निवारयितुमशक्यत्वात्। अयं चार्थस्त्रैदोष्यव्यवस्थाभङ्गस्थले उपपादितः। तस्मात्तत्र-अव्याप्तिः।

एवं तुल्यन्यायतया -'दण्डी प्रैषानन्वाहे" त्यादावप्यव्याप्तिरेव। तत्रापि तमोऽवगाहनादौ मैत्रावरुणकार्ये दण्डनिवृत्त्यर्थं तन्निवृत्तेरेव विधेयत्वात्।

नन्वत्र इतरनिवृत्त्योर्विधेयत्वेऽपि प्रकृतोद्देश्येऽश्वरशनाग्रहणे प्रैषानुवचने चाविधेयत्वान्नाव्याप्तिरिति चेत्। नैतदेवम्। उक्तविधया त्रैदोष्यग्रस्तपरिसंख्याविधित्वापेक्षया लाघवान्नियमविधित्वेनैव तस्याभ्युपगमनीयतापत्तेः। नियमविध्यवकाशसत्त्वे परिसंख्यात्वाभ्युपगमस्य तत्रापि त्रैदोष्यावहस्य सुतरामयुक्तत्वात्। कर्तृनियमार्थत्वेन नियमार्थत्वमुक्तमेव। मन्त्रनियमार्थत्वेनापि तत्सम्भवति, अन्यनिवृत्तिमात्रतात्पर्यकत्वे मन्त्रनियमासिद्धिप्रसंगात्। मन्त्रस्याश्वरशनासम्बन्धमात्रेणाकांक्षाशान्त्या तदुपजीविलिङ्गविनियोगस्यापि नियमलम्भकस्याभावात्।

तर्हि मम निवृत्तिफलकत्वघटितं लक्षणमपि नास्तीति नातिव्याप्तिरिति चेत्। सत्यम्। सिद्धान्तिना तदभ्युपगमस्यायुक्तत्वात्। तस्मात्तस्य परिसंख्यार्थत्वं निवृत्त्यविधायकत्वं च प्रसाधनीयम्।

"नानृतं वदेदि" त्यत्राव्याप्तिश्च। तत्रानृतवदननिवृत्तेः प्रकृतविधिफलीभूतायाः प्रकृतविधिविधेयत्वात्।

न च तत्र विशेषणाभावः, पंचनखभक्षणनिवृत्तिवत्पुरुषार्थायास्तस्याः प्रकृतविध्युद्देश्ये पुरुष एव विधीयमानत्वात्, प्रकृतधात्वर्थीभूतानृतवदनप्रतियोगिकत्वाच्च।

(१) अयं विचारः ५१ पृष्ठे द्रष्टव्यः।

ननु तर्हि तदलक्ष्यमेवास्तु "न हिंस्यादि" तिवत्, तर्हि "पंच पंच नखाः" इत्यत्रातिव्याप्तिः। तत्रापि पुरुषस्य पंचनखभक्षणेनेव तद्वर्जनेनापीप्सितसम्भवेन पक्षप्राप्तस्याप्राप्तांशपूर्त्यवकाशसत्त्वेन "न हिंस्यादि तिवन्नियमविधित्वौचित्यात्।

अथ पक्षपूर्वप्राप्ती न नियमविधित्वप्रयोजिके। वैकृतोदुम्बरता–हिरण्यगर्भमन्त्रनियमविध्याद्यव्यापकत्वात्। किन्तु दृष्टार्थत्वम्। तच्च वानरादिभक्षणनिषेधेन सम्भवतीति नियमविधित्वाभावात्, एतद्विध्यप्रवृत्तिव्यापकाप्राप्तिमदर्थकत्वाभावेनापूर्वविधित्वस्याप्यभावात्, विधित्रैविध्यभंगभीत्या निवृत्तिफलकत्वसाधर्म्याच्च परिसंख्याविधित्वमेवेति चेत्। तर्हि "नानृतं वदेदि" त्यत्राप्यनया रीत्या परिसंख्यात्वे तत्राव्याप्तिरेव। एवञ्च "न हिंस्यादित्यादावप्यव्याप्तिरेव।

एवं "नातिरात्रे षोडशिनमि" त्यादावप्यव्याप्तिः। न च तदलक्ष्यमेवेति वाच्यम्। तर्हि नायं नियमविधिः, अदृष्टार्थत्वात्, पक्षप्राप्तांशपूरणफलकत्वाद्यभावाच्च। नाप्यपूर्वविधिः, प्रवर्तनाबोधकत्वे सती ति विशेषणसमर्थनावसरे अपूर्वविधिलक्षणस्याव्याप्तिमाशंक्य निवृत्तिफलकविधिमात्रस्य परिसंख्याविधित्वात् "नातिरात्र" इत्यादिनिषेधापूर्वविधीनामपूर्वविधित्वमेव नास्तीत्युक्तत्वात्। परमसिद्धान्तलक्षणत्वेन स्वाभिमतस्य लक्षणीयविध्यप्रामाण्यप्रयोजकविध्यन्तरेत्यादिघटितापूर्वविधिलक्षणस्याव्याप्तिमाशंक्य, तत्परिहारार्थमपि षोडशिग्रहनिषेधविध्यलक्ष्यत्वाङ्गीकारस्य पुनः स्मारितत्वाच्च।

एवञ्चास्य परिसंख्याबहिष्कारे विधित्रैविध्यभङ्गप्रसङ्गः। स्वाभ्युपगमविरोधः, निवृत्तिफलकविधिमात्रस्य परिसंख्याविधित्वादिपूर्वोदाहृतवाक्य एव तस्य परिसंख्यात्वस्याप्यभ्युपगतत्वात्।

किञ्च स्वेच्छया लक्ष्यालक्ष्यविभागं कृत्वा लक्षणप्रणयनमयुक्तमित्यप्युक्तमेव। तथा "चार्थाद्वा शब्दतो वा स्वविषयगलितादेवकारान्नञो वा यः स्यात् कस्यापि बाधः स भवति परिसंख्ये"ति विधिरसायनीयसिद्धान्तोपक्रमवाक्यदर्शितलक्ष्यविभागानुसारेणैव लक्षणानां तत्पूर्वपक्षनिराससमर्थत्वाद्यभिमानिभिः कर्तव्यतया "नातिरात्रे" इत्याद्यव्याप्तिरेव।

एवमप्रामाण्यप्रयोजकचोदकरूपविध्यन्तरप्रयोज्याप्राप्तिमत्त्वात्पक्षप्राप्तिपूर्तिफलयोरभावाच्च। परिसंख्यायां "न तौ पशौ करोती"त्यत्राव्याप्तिरूह्या।

किञ्चैवं "न भूपालैरनुत्सव" इति परिसंख्येति ततोऽपूर्वविधिलक्षणं व्यावर्त्य, सम्प्रति तत्सङ्ग्राहकलक्षणाप्रणयनमयुक्तमेव। तत्राधारणनिवृत्ते"र्न नीलीवसनं धारयेमि"ति पूर्ववाक्यानुषङ्गलब्धधारणानुष्ठानभिन्नत्वाभावादितरनिवृत्तेः।

ननु प्रकृतधात्वर्थानुष्ठानभिन्नत्वविशेषणं त्यजामि, येनाव्याप्तिः स्यात्। न चाग्निहोत्रादिविध्यतिव्याप्तिः, तत्रेतरनिवृत्तेः प्रकृतधात्वर्थत्वेन तत्प्रतियोगिकत्वाभावादेवातिव्याप्तिवारणादिति चेत्। सत्यम्। एवं लक्षणकारो मन्यते—यदाह्याग्निहोत्रविधावतिव्याप्तिदानग्रन्थेन चाकरणनिवृत्तेः प्रकृतविधिविधेयत्वान्नातिव्याप्तिरिति वाच्यम्। तस्याः स्वरूपेण प्रकृतविधिविधेयत्वेऽपि प्रकृतधात्वर्थप्रतियोगिकत्वेन प्रकृतविधिविधेयत्वाभावादिति, तेन तत्प्रकारेण विधेयत्वं विवक्षितमिति ज्ञायते। तादृशविवक्षायामग्निहोत्रादिविध्यतिव्याप्तिवारणाय तस्य विशेषणस्यावश्यकत्वे त्वया मया वा त्यक्तुमशक्यत्वात्।

किञ्च तादृशविवक्षायां "न हिंस्यादि"त्याद्यतिव्याप्त्यनिरासश्च। "न हिंस्यादि"त्यादावपि वस्तुतो हिंसाप्रतियोगिकनिवृत्तिरेव विधेया, न तु तत्प्रतियोगित्वादिप्रकारेण प्रतियोगित्वाद्युपस्थापकपदाभावात्।

प्रकृतोद्देश्ये प्रकृतिविधिविधेयान्या प्रकृतधात्वर्थप्रतियोगिका या इतरनिवृत्तिस्तत्फलकत्वं परिसंख्यात्वमिति करणेऽपि 'न भूपालैरनुत्सव' इत्यत्राव्याप्तिरेव। तत्र धारणाकरणनिवृत्तेः प्रकृतधात्वर्थात्मकतया तत्प्रतियोगिकत्वाभावात्।

किञ्च 'प्रकृतविधिविधेयान्ये'त्यत्र प्रविष्टं विधेयत्वं विधितात्पर्यविषयत्वमात्रं वा, विधिप्रत्ययप्रतिपाद्यत्वं वा ? आद्ये—असम्भवः। सर्वत्र फलीभूताया निवृत्तेर्विधितात्पर्यविषयत्वात्। अन्त्ये--स्वव्याघातः। तथाहि—'पञ्च नखा' इत्यत्र वानरादिभक्षणनिवृत्तेः प्रकृतोद्देश्यसम्बन्धित्वेन विधीयमानत्वाभ्युपगमात्।

ननु तावता कः स्वव्याघातः। एवं हि 'पंच पञ्चनखा भक्ष्या' इत्यत्र कूर्मादिपञ्चकविषयतया प्रतीयमानस्य स्वार्थं हित्वा, वानरादिभक्षणं न कार्यमित्यर्थः स्वीकृत इति भाति। तत्र कामं त्रैदोष्यमापद्यताम्, नास्ति स्वव्याघात इति चेत्। सत्यम्। एतावता नास्त्यग्रिमग्रन्थस्यापि पर्यालोचनया त्वस्ति। तत्परिहारग्रन्थे हि विधीयमाना निवृत्तिर्न कूर्मादिभक्षणरूपप्रकृतधात्वर्थप्रतियोगिनी, वानरादिप्रतियोगिकत्वादित्याह। तत्र कूर्मादिभक्षणस्यैव प्रकृतधात्वर्थत्वमित्युक्त्या न तत्र वाक्ये स्वार्थत्याग इति गम्यते। वानरादिभक्षणलक्षकत्वे तद्भक्षणस्यैव धात्वर्थतया कूर्मादिभक्षणस्य धात्वर्थत्वायोगात्। तथा च वानरभक्षणनिवृत्तेश्शाब्दप्रतिपाद्यत्वस्यैवाभावेनाव्याप्त्यप्रसक्तौ तद्वारकविशेषणानुपयोगात्। एवञ्च विशेषणोपादानाद्वानरभक्षणनिवृत्तिश्शाब्दीति कूर्मादिभक्षणस्य प्रकृतधात्वर्थत्वोक्त्या च साऽऽर्थी गम्यत इति विरोधः।

वस्तुतस्तु निर्निमित्तकलक्षणाश्रयणायोगात् तत्राव्याप्तिप्रसक्तेः, तद्विशेषणोपादानक्लेशो व्यर्थ इति ।

किञ्च 'आज्यभागौ यजती' ति परिसंख्यायामव्याप्तिश्च, निवृत्तिफलकत्वाभावात्, गृहमेधीयप्रकरण एव 'इडामुपह्वयत' इत्यादिप्राकृताङ्गपुनःश्रवणान्तरेण परिसंख्याताज्यभागप्राप्तिमात्रफलकत्वेनान्यलभ्याङ्गान्तरनिवृत्तिफलकत्वाभावात् ।

अथ प्रकृतविधिफलीभवन्निवृत्तिबोधकत्वाभिमतोपदेशत्वावच्छिन्नोपदेशाप्रवृत्तौ तर्क्यमाणायां निवृत्तिफलकत्वेनासम्भवन्निवृत्तिकत्वं विवक्षितं चेत् । 'पञ्च पञ्चनखा' इत्याद्यव्याप्तिः, तत्र तद्विधेरेव तादृशतया तदप्रवृत्तावपि रागतः एव कदाचिद्वानरादिभक्षणनिवृत्तेरसम्भवेनासम्भवन्निवृत्तिकत्वाभावात् ।

अथ निवृत्तिफलकत्वमेव लक्षणम् । 'न हिंस्यादि'त्याद्यपि लक्ष्यम् । प्रकृतविध्यविधेयत्वादिकं किमपि न विशेषणम् । अतो न कोऽपि दोष इति चेत् । इदमपि न युक्तम् । उक्तविधया प्राप्तिफलिकाया 'माज्यभागौ यजती'ति परिसंख्यायामव्याप्तेः । तत्परिहाराय प्रकृतविधिफलीभवदित्यादिविवक्षायां 'पञ्च पञ्चनखा' इत्यादौ, 'न हिंस्यात्, नानृतं वदेदि'त्यादौ च बहुलमव्याप्तिप्रसङ्गात् ।

अथ विधौ सति नित्या निवृत्तिर्भवति । तदभावे पाक्षिकी । तथा च विधौ सति यद्रूपा निवृत्तिः फलति, तद्रूपेण तद्बोधकसर्वोपदेशाप्रवृत्तावसम्भाव्यमानप्रवृत्तिकत्वं विवक्षितं चेदपि, तत्रैवाव्याप्तिः, कस्यचिज्जन्मप्रभृतिसृगालवानरमांसेभ्य उद्विजमानस्यैतद्विध्यभावेऽपि नित्याया एतन्निवृत्तेस्संभवात् ।

किञ्च 'अपबर्हिषः प्रयाजानि'त्यादौ बर्हिःप्रयाजनिवृत्तिफलकविध्यतिव्याप्तिश्च ।

किञ्च प्रकृतविध्युद्देश्येत्यादिविवक्षायामग्निहोत्रविध्याद्यतिव्याप्तिशङ्कोपपादनग्रन्थे लौकिककर्मणामग्निहोत्रादीनां चाकरणयोः समुच्चित्य प्राप्तिरुपपादिता । सा यद्यपि विधिरसायन एव लिखिता, तथापि समुच्चित्यप्राप्तिघटितयथाश्रुताचार्यलक्षणप्रवृत्तेर्न तत्रातिव्याप्तिदानायोपयुज्यते । भवत्कृतविवक्षायां तु सर्वात्मनानुपयुक्तेति तल्लेखनम्, विधिरसायनं पङ्क्तिशो लिखतां सम्पातायातमिति ध्येयम् ।

"अत्र ह्यवावपन्ती"त्येतल्लक्ष्यमेवात्र नेति नवीनाः समर्थयन्ते । यद्यपि तत्सिद्धान्तिनामयुक्तम्, तथापि बुद्धिकौशलप्रकटनार्थत्वाददोषः ।

तथाहि "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्, अत्र ह्येवावपन्त्यत एवोद्वपन्ती"ति श्रूयते। अत्र साम्नामावापो विधेयः, अत्यन्ताप्राप्तत्वात्। विकृतिप्रकरणे आम्नातानां साम्नामुत्तराग्रन्थे योनिऋक्पाठसत्त्वे तत्रैव तत्साम गीयेत। तदभावेऽपि "अन्ते तु बादरायण" [ ५-२-१९ ] इति न्यायेनान्त्यऋच एव, सर्वथा गायत्र्यादिषु सामाप्राप्तेः।

न चात्र ऋगावाप एव विधेय इति वाच्यम्, ऋक्षु तदावापस्याशक्यत्वात्,। अत एव न ऋक्सहितसामावापोऽपि सम्भवति। तस्मादप्राप्तत्वात्, बाधकाभावाच्च सामावाप एव विधेयः। न तु ऋगन्तरावापः परिसंख्येयः। तथात्वे तदर्थवादानाञ्जस्यात्। गायत्र्यादीनामुदरत्वेन संस्तवस्य तत्सम्बन्ध्यर्थविधान एव स्वरसत्वात्।

न चास्यावापविधायकत्वे स्तोत्रान्तरेष्वावापनिवृत्तिर्न सम्भवतीति, तदर्थमपि तत्र विधेर्व्यापारांगीकारे वाक्यभेदस्स्यादिति वाच्यम्। आवापमात्रस्य गायत्र्यादिविशेषविषयत्वबोधकशास्त्रादेव तन्निवृत्तेरर्थात्सिद्धेः। अत एव प्राभाकरैरपूर्वविधित्वमेवास्य व्यवस्थापितम्।

किञ्च परिसंख्याविधिपक्षे संख्यासामञ्जस्याय ऋचामेवावापप्रसक्तौ तन्निवृत्तिर्विधेया। न च स्तोत्रान्तरे ऋचां प्रक्षेपरूपावापपरिसंख्याविधानेन गायत्र्यादिषु साम्नां प्रक्षेपरूपावापः प्राप्नोति, येनावापस्यार्थसिद्धत्वं तद्विधानार्थं वचनं न भवेत्।

न च पृथक्त्वनिवेशिन्याः संख्यायाः संभवत्सामञ्जस्यापरित्यागाय गायत्र्यादिषु सामावापो न्यायप्राप्त इति वाच्यम्। तथा सति स्तोत्रान्तरेष्वपि ऋगावापपरिसंख्यानेऽपि सम्भवत्संख्यासंपत्तये सामान्तरावापप्राप्तौ स्तोत्रान्तरेष्वगत्याऽभ्यासात्संख्यापूरणमिति दाशमिकाधिकारणराद्धान्तभङ्गप्रसंगात्।

ततश्चाभ्यासात्संख्यापूरणमिति राद्धान्तनिर्वाहार्थं गायत्र्यादिषु सामान्तरावापविधानमेष्टव्यम्।

न च गायत्र्यादिषु सामावापविधानेन स्तोत्रान्तरेषु सामावापनिवृत्तावपि ऋगन्तरावापो निरस्त इत्यभ्यासात्संख्यापूरणं न साधितमिति वाच्यम्। सामसंस्कार्यतां विना केवलऋचामप्राप्तत्वेन प्राकृतऋचां सामसंस्कृतानामभ्यासादेव संख्या पूरणीयेति न राद्धान्तहानिः। तथाचावापनिबन्धनदभ्यासात्संख्यापूरणस्य "त्रीणि ह वै यज्ञस्ये" ति वचनमावापविधानार्थम्, न परिसंख्यार्थमपि। तथा सत्यर्थद्वयविधिपरत्वे वाक्यभेदप्रसंगात्। तथा चावापविधेरपूर्वविधित्वेन न परिसंख्याविधिलक्ष्यत्वमिति।

अत्र ब्रूमः—नापूर्वविधिः, एवकारेण विधिशक्तिविलोपात्, अत्यन्ताप्राप्तविषयत्वाभावाच्च। तथाहि—मत्पक्षे प्राप्तावापमात्रं परिसंख्यायते, नर्चामेव, न वा साम्नामेव। प्राप्तिश्चावापस्य विवृद्धस्तोमक्रतुषु स्तोत्रीयागतसंख्यात्मकस्तोमसम्पत्तये सामसहितानामेवर्चां, केवलानान्तु स्तोत्रीयत्वाभावात्। प्रगीतमन्त्रस्यैव स्तोत्रीयत्वात्, अप्रगीतस्य शस्त्रबोधनात्। क्वचित्केवलसाम्नोऽप्यावापप्राप्तिरस्ति। यत्र क्रतुसन्निधौ केवलं सामाम्नायते, तद्योनिश्चोत्तराग्रन्थे न पठ्यते, तत्र प्रत्यक्षश्रुतस्य तस्य क्वचित्स्तोत्रेऽवश्यमावप्तव्यत्वात्। तद्यद्यपि छन्दोग्रन्थे क्वचिद्योन्यामुत्पन्नं भवति, तथापि तया सह तत्साम तत्र क्रतौ न निविशते, तदीयस्तोत्राङ्गतया चोदकानीतानां प्राकृतीनामृचामबाधनीयत्वात्।

कण्वरथन्तरादियोनिऋग्भिस्तूत्तराग्रन्थपठितत्वादौपदेशिकीभिरातिदेशिकीनामबाधेऽपि न दोषः। एवं च केवलसाम्नां वा सामसहितानामृचां वा प्राप्तस्यावापस्य परिसंख्याने सामसहितानामृचां क्वापि नावाप इति सिध्यति। अपर्युदस्तगायत्र्यादावप्ययोग्यतापराहतत्वात्। तदभावात्तु प्रत्यक्षश्रुतं केवलं साम गायत्र्यादिभ्योऽन्यत्र क्वापि निवेशमलभमानं स्वपाठसाफल्याय गायत्र्यादिगतं प्राकृतं साम बाधित्वा, गायत्र्यादिष्वेव निविशत इति, कथमत्यन्ताप्राप्तिस्साम्नाम्। किन्तु नित्यप्राप्तविषयत्वादनुवाद एव"अत्रह्येवावपन्ती" ति।

किञ्चावापविधायकत्वे स्तोत्रान्तरेष्वावापनिवृत्त्यनुवादासम्भवादेवकारार्थांशेऽपि विधिव्यापारावश्यंभावे वाक्यभेदोऽपि स्यात्।

न चावापमात्रस्य गायत्र्यादिविशेषविषयकत्वबोधकशास्त्रादेवान्यत्रावापनिवृत्तिस्सिध्यतीति वाच्यम्। यत आवापमात्रस्य गायत्र्यादिबोधकशास्त्रान्तरसद्भावे प्रकृतविधेरनुवादत्वापत्त्याऽपूर्वविधित्वाङ्गीकारविरोधादिदमेव तादृशशास्त्रं वाच्यम्। तथा चास्यावापविधिमात्रपरत्वे कथमस्य स्तोत्रान्तरान्निवृत्तिः। न हि 'व्रीहिभिर्यजेते'त्यादिना यागे व्रीहिविधौ भोजनादिभ्यो व्रीहिर्निवर्तते। यदि ह्यावापमनूद्य तद्गुणत्वेन गायत्र्यादिकर्म विधीयेत, तदाऽऽवापस्य प्रधानत्वात्, तद्व्यापी गायत्र्यादिगुणोऽनुष्ठेय इति फलत आवापोन्यत्र न स्यात्। न चैवमुक्तम्, अत्यन्ताप्राप्त्युपपादनपूर्वकं सामावापांशेऽपूर्वविधिरिति स्वीकारात्।

नच तथाङ्गीकर्तुमपि शक्यम्, अप्राप्तस्यावापस्यानुवाद्यत्वायोगात्। तत्पक्षे त्वन्यत्रावापो न कर्तव्य इत्युक्ते केवलसामावाप ऋक्सामावाप इत्युभयमपि निवर्तते। निषेधस्थले प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनि निषेधान्वयात्। यथा 'ब्राह्मणो न हन्तव्यः' इत्युक्ते कोऽपि ब्राह्मणो न हन्यते।

तद्वदावापो न कार्य इत्युक्ते कोऽप्यावापो न सिध्यतीति वैषम्यम्। तदेवं प्राप्तार्थत्वाद्वाक्यभेदप्रसङ्गादेवकारश्रुतिस्वारस्याच्च नापूर्वविधिः, किन्तु परिसंख्याविधिरेव।

न च तथा सत्यर्थवादस्य न स्वारस्यमिति वाच्यम्। यत्रावापः परिसंख्यायते, तस्यावापार्हत्वेन निन्दार्थं तद्भिन्नाधिकरणस्यावापार्होदरत्वस्तवनस्यापि निन्दार्थापनद्वारा स्वरसत्वात्, विध्युद्देशगतैवकारश्रुतिबाधनापेक्षयालाक्षणिकत्वेनावश्याङ्गीकार्येऽर्थवादे किञ्चिदस्वारस्येऽपि दोषाभावाच्च।

न च त्वत्पक्षे ऋचामेव परिसंख्येयतया सम्भवत्संख्यासामञ्जस्याय स्तोत्रान्तरेषु सामावापे तत्राभ्यासात्संख्यापूरणसिद्धान्तभङ्ग इति वाच्यम्। स्तोमशब्दार्थानुसारेण सामविशिष्टानामृचां प्रत्यक्षपाठात्केवलसाम्नां चावापप्राप्तौ तदुभयनिषेधे अगत्याभ्यासात्संख्यपूरणसिद्धान्तस्य सुदृढत्वात्।

एतेन "न च पृथक्त्वनिवेशिन्या" इत्यादिग्रन्थेन प्रत्यक्षसामाम्नानाभावेऽपि संख्यासामञ्जस्यानुरोधायैव गायत्र्यादिषु सामावापप्राप्तिं परिसंख्यावाद्यभिमतां मत्वा स्तोत्रान्तरेष्वपि ऋङ्मात्रपरिसंख्यानेऽपि सामावापमापाद्य, दाशमिकाधिकरणविरोधापादनमपास्तम्, प्रत्यक्षपठितसाम्नामेवावापस्य गायत्र्यादिषु स्वीकारात् 'अत्रह्येवावपन्ती'त्यंशानुवादत्ववादिनस्तावन्मात्रेण चरितार्थत्वाच्च। प्रत्युतापूर्वविधिवादिन एव तदधिकरणविरोधः, गायत्र्यादिषु सामावापविधानेऽपि स्तोत्रान्तरेषु तदनिवृत्तेरुक्ततया तत्राभ्यासाप्रसक्तेस्सामविधानात्सामावापमात्रनिवृत्तावपि ऋगावापसम्भवे तत्र ऋगंशेऽभ्याससिद्धान्तहानेश्च।

न च केवलानामृचामयोग्यतयाऽऽवापो न प्राप्नोतीति वाच्यम्। प्राकृतसाम्नैव संस्क्रियमाणाया अपूर्वाया ऋचः संख्यासामञ्जस्यानुरोधेनावापस्य सम्भवात्। तस्मादपूर्वविधिवादिन एव राद्धान्तभङ्गप्रसंगः।

किञ्चावापस्य विधेयत्वे स्तोमविवृद्धिस्थल एवावाप इति न स्यात्। किन्तु सर्वत्रैव सोमयागे गायत्र्यादिगुणतयाऽऽवापस्स्यात्। प्रधानानुसारेण सर्वत्र गुणस्य सम्पाद्यत्वात्।

परिसंख्यापक्षे तु स्तोमविवृद्धिस्थल एव प्राप्ततयाऽऽवापपरिसंख्याने तत्रैव प्राप्त आवापः परिशेषाद्गायत्र्यादौ व्यवतिष्ठेतेति द्रष्टव्यम्। तस्मात् "अत्र ह्येवावपन्ती"ति परिसंख्या लक्ष्यमेवेति सिद्धम्।

यत्तूक्तं यत्र ग्राह्ये व्यावर्तनीये च प्रकृतविध्युपजीवनमन्तरेण समुच्चित्य प्राप्तिरस्ति, यत्र वा शेषिणि ग्राह्यस्य व्यावर्तनीयस्य च समुच्चित्य प्राप्तिः

रशनाग्रहण-शंय्विडान्तपरिसंख्यादौ, तत्रैव तान्त्रिकाणां परिसंख्याव्यवहार इति । तदप्ययुक्तम् । अत्रैव शास्त्रदीपिकादौ परिसंख्याव्यवहारदर्शनात् ।

किञ्च "दक्षिणा सोमस्ये"त्यादिपरिसंख्यायामभावात् । तत्र हि दक्षिणा कर्तृद्वारा कर्मणि निविशमाना आनमयितव्यकर्तृसाध्येष्वङ्गेष्वेव निविशते, न तु स्वयमानतयजमानमात्रकर्तृके सोमयागे ।

किञ्च "स ब्रह्मणे देयः, स प्रियाय सगोत्राय ब्रह्मणे देयः" इत्यादौ प्राप्ते ब्रह्मणि व्यावर्त्येषु होत्रादिषु च चमसादिदक्षिणायास्समुच्चित्यप्राप्तौ सत्यामपि परिसंख्याव्यवहाराभावान्नेदं व्यवहारप्रयोजकमित्यास्तां तावत् ।

तस्मा"द्विरुद्धं सकलमिव भवद्दृश्यते येन तन्त्र"मिति यदुक्तं दीक्षितेन्द्रैः, तत्तथैव वज्रलेपायते ।

कथं बत निरुध्यतां कमलनालसूत्रैस्त्वया
मदत्रुटितशृंखलावलयबन्धनः सिन्धुरः ।
कृतं विधिरसायने तदिह दूषणान्वेषणै-
र्वरं पुरहरे चिरं मन इदं सखे स्थाप्यताम् ॥

इति श्रीमन्नल्लबोम्मकुलार्णवपूर्णचन्द्र-चिन्नमाम्बागर्भशुक्तिमुक्ताफल-ब्रह्मण्यबिरुदाङ्कित-चोल्लनाथभूपालप्रियसचिव-चिन्नबोम्मभूपालहृदयकुहरविहरमाणसांबशिवप्रेरितेन चिन्नाप्पय्यदीक्षितेन विरचितायां दुरूहशिक्षायां परिसंख्याविधिलक्षणा-क्षेपपरिहारभङ्गो नाम सप्तस्तरङ्गः ।

दुरूहशिक्षा सम्पूर्णा ।



## शुद्धिपत्रम्

| अशुद्ध | शुद्ध | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| योगात् | अयोगात् | २ | १८ |
| आपत्या | आपत्त्या | ,, | २८ |
| भाव | भावबोधनाय | ३ | १९ |
| शाब्द | शब्द | ,, | ,, |
| भवन | भावना | ४ | १० |
| कर्तव्या | कर्तं वै | ७ | २२ |
| अदृष्टार्थो | अदृष्टार्थौ | ८ | ५ |
| म्नेतेन | आम्नातेन | ,, | २८ |
| सिद्धेन | सिद्धैर्न | ,, | २९ |
| पारीवाप | परिवाप | ९ | १९ |
| प्रायवचनाच्च | प्राये वचनाच्च | १० | ८ |
| मतद्भावात् | तद्भावात् | १० | १८ |
| भावितत्वात् | उभावितत्वात् | १२ | २३ |
| ग्रहया | ग्रहाय | ,, | ३९ |
| यजमान | यजमानः | १४ | १४ |
| बोध्येत | बोध्येन | ,, | ३० |
| अक्षिपेत | आक्षिपेत् | १५ | ५ |
| उपरोक्त | उपर्युक्त | ,, | २२ |
| प्रकृतं | प्रतूर्तं वाजिन्नाद्रवेति | १६ | ११ |
| उद्देश | उद्देशे | १६ | २६ |
| हेयकर्मा | ह्येकस्याम् | १७ | २ |
| स्सावकत्वं | स्तावकत्वं | १८ | ६ |
| तान्निराकरण | तन्निराकरण | ,, | २६ |
| वैयथर्य | वैयर्थ्यं | १९ | ७ |
| प्रार्ति | आर्तिः | २२ | ३ |
| कापि | क्वापि | ,, | १७ |
| पुरोडाशमलंकुरू | पुरोडाशानलङ्कुरु | २३ | ९ |
| साम | सोम | ,, | २२ |
| हविषानां | हविषाम् | २४ | ७ |
| मात्रं | मार्तम् | ,, | ८ |

| | | | |
|---|---|---|---|
| अविशेषणे | अविशेषेण | ,, | १७ |
| न विशिनष्टि | विशिनष्टि | ,, | २२ |
| अस्त्यैव | अस्त्येव | ,, | २७ |
| वश्यं | अवश्यं | | |
| साम्या | साम्याल्लभते | | |
| ऐन्द्रया | ऐन्द्र्या | | |
| मन्त्राय | मन्त्रात्तु | | |
| पाप | पाय | ३० | ७ |
| स्वेछा | स्वेच्छा | ,, | १२ |
| कथम | कथम् | ,, | १८ |
| लक्षणायाः | लक्षणया | ३१ | २२ |
| स्थायी | स्थायीभावस्य | ३२ | ९ |
| लक्षणासिषाधयिषितः | लक्षणां सिषाधयिषतः | ,, | ,, |
| विधानस्या | विधानं | ३३ | १६ |
| तदपिनायं | तदपि न | ३७ | ११ |
| व्रीहित | व्रीहिगतं | ३८ | ४ |
| किञ्च | किञ्च | ४० | १९ |
| पर्यनात्व | पर्यन्तत्व | ४२ | ३१ |
| आहनीय | आहवनीयः | ४४ | ५ |
| आदो | आदौ | ४५ | १८ |
| अवय | अवयव | ,, | ,, |
| स्यव | स्यैव | ,, | ३० |
| आकांक्षाया | आकांक्षया | ४६ | १८ |
| नेवारैः | नैवारैः | ४६ | १९ |
| व्याक्षिप्येत | आक्षिप्येत | ,, | ,, |
| समेत | समवेत | ४८ | ३० |
| ससाण्ड | स्साण्डः | ,, | ३१ |
| श्रुतिः | स्तुतिः | ५२ | १ |
| द्रयोद्देश्यस्य | द्रव्योद्देश्यत्वं | ५३ | १७ |
| वचनात् | वचनानि | ५५ | १४ |
| वच | वचन | ,, | २५ |
| इत्येद् | इत्येतत् | ५७ | १९ |
| इयैत | श्यैत | ,, | ३० |
| समुच्चयो | समुच्चयः | ५९ | २ |

| | | | |
|---|---|---|---|
| प्रकृत | प्रकृतौ | ,, | ४ |
| एकोक्थ्ये | उक्थ्यो | ६० | ३ |
| नीयमार्थत्वात् | नियमार्थत्वात् | ६२ | २२ |
| | पृष्ठे उपसंहारवाक्ये | | |
| | एवं कुण्डलितं विहाय पठितव्यम् | ६३ | |
| | सतोविकृताव इति पठनीयम् | ६४ | |
| विकृत | विकृति | ६८ | ११ |
| विधायकत्वात् | अविधायकत्वात् | ६९ | २६ |
| उपदिष्टत्व | उपदिष्टत्वम् | ७० | ३० |
| तदर्थं | तदर्थः | ७४ | ५ |
| त्नत्वे | उत्पन्नत्वे | ७८ | २३ |
| सूचयन् | सूचयत् | ७९ | ४ |
| कल्पयित्वा | अकल्पयित्वा | ७९ | ११ |
| वचनेनात् | वचनेन | ७९ | २३ |
| ह्यावहनीय | ह्याहवनीय | ८० | २६ |
| दशाभ्यासस्य | दशधाभ्यासस्य | ,, | २९ |
| संभवे | सत्वे | ८१ | ३० |
| दशाभ्यास | दशधाभ्यास | ८२ | १ |
| अग्ने | अग्नेः | ८२ | २ |
| सोमस्य | सोमस्स्यात् | ८४ | २७ |
| व्याप्तिः | अव्याप्तिः | ८७ | ७ |
| समान्यं | सामान्यं | ९० | ३ |
| व्याप्तिः | अव्याप्तिः | ९० | ९ |
| तादात्म्याभाव | तादात्म्याभावः | ९० | १३ |
| प्रवृति | प्रवृत्ति | ९० | ३१ |
| यजजी | यजतीति | ९२ | ३ |
| अववनीय | आहवनीय | ९२ | १४ |
| विसिभावस्य | विशिष्टाभावस्य | ,, | २० |
| विवक्षिं | विवक्षितम् | ९४ | ४ |
| सामिधोनीं | सामिधेनीम् | ९५ | २३ |
| उत्थाय | उत्थाप्य | ९६ | ३ |
| विस्तरणीयं | विस्मरणीयम् | ९६ | ५ |
| तर्केण | तर्कणेन | ९८ | ८ |
| मेदः | भेदः | ९९ | ३ |

| | | | |
|---|---|---|---|
| प्यक्ष | पक्ष | ,, | २२ |
| हविष्णु | हविष्पु | १०२ | १८ |
| श्रयन्ति | श्रपयति | १०३ | २६ |
| वाक्योः | वाक्ययोः | ,, | ,, |
| श्रवणश्र | श्रपण | १०५ | ९ |
| तण्डुलवाकयं | तण्डुलवाक्यं | १०७ | ७ |
| तदर्थततया | तदर्थतया | ,, | ११ |
| विवा एनं | विवा एतं | १०८ | २७ |
| अभ्युदिले | अभ्युदिते | ११० | ९ |
| प्रातर्दोह | प्रातर्दोहे | ,, | २२ |
| दृष्टार्थ | दृष्टार्थ | १११ | ७ |
| पूताक | पूतीक | ११४ | ६ |
| उपद्रष्ट | उपद्रष्टृ | ,, | २५ |
| आछिनत्ति | आच्छिनत्ति | ११५ | ११ |
| उद्दोश्य | उद्देश्य | ,, | १४ |
| अनुष्ठेयं प्रकाशयतः | अनुष्ठेयमप्रकाशयतः | ,, | २२ |
| तत्रेपायत्वेन | तत्रोपायत्वेन | ११७ | २४ |
| कृप्त | क्लृप्त | ११८ | २७ |
| अगृणन् | अगृभ्णन् | ,, | ३० |
| अनुनिष्पादित | अनुनिष्पादि | ११९ | ८ |
| यविशेषे | यज्ञविशेषे | ,, | २० |
| ना नियमः | न नियमः | १२० | २४ |
| चत्तुर्थं | चतुर्थ | १२१ | ९ |
| तदन्यावच्छेदेनाप्राप्तेरित्येकवारं | पठनीयम् | १२२ | २६ |
| नियम | नियमस्य | १२३ | १८ |
| अप्रवृत्तो | अप्रवृत्तौ | १२४ | १२ |
| संभवः | असंभवः | ,, | १४ |
| अशक्या | अशक्त्या | ,, | २१ |
| देव | तदेव | ,, | २६ |
| न्येत्यनन्तरं | स्यादिति पठितव्यम् | १२५ | २ |
| असंभावितत्वात् | असंभवात् | १२६ | ३० |
| विधाय | विधौ | १२८ | ३ |
| संभवप्रासि | संभवप्राप्ति | ,, | १७ |